# अथवैद्यजीवन

लोलिम्बराज कविकृतोवैद्यजीवनग्रंथः।
श्रीसुखानन्दनाथविरचितया श्रीलो
लिम्बदीपकयायुक्त औषधविषये-
भाषाविवरणसहितश्च·




कालिन्दगिरिनन्दनीतटनिकट मधुपुरीति प्रसिद्धनगरे·
विराजमानयोः
श्रीमत् हरिप्रसाद जमनादासयोःस्वकीय काशिसमान-
नाम्नियंत्रालयेनिजप्रबंधेहांकितोभूत्
रामदिशिनन्दचन्द्रमितिविक्रमाब्देशरदेकार्तिक
कृष्ण २ शुभभृगुदिने

सं१९४३वि·

मौल्यप्राति ।॥)

ॐश्रीकृष्णायनमोनमः

# अथवैद्यजीवनस्यलक्षणपत्रम्॥

पृष्ठपंक्तिक्रमेण॥

# तत् मत्

॥ श्रीगणेशायनमः॥

## अथश्रीलोलिम्बराजकृतोवैद्यजीवनग्रंथ ष्टीकासहितःऔषधविषयेभाषाटीकासहितश्च॥

विश्वेशंशारदांदुर्गां गुरुंगणपतिंहरिम्। सुरेश
नन्दः प्रकुरुते नत्वालोलिम्बदीपिकाम्॥१॥ अथलोलि
म्बराजः कविः शिष्टाचारमङ्गीकृत्य प्रारब्धग्रंथस्याविघ्ने
न परि समाप्त्यर्थं श्रीकृष्णमर्थं यन्नाशीर्वादात्मकं मङ्गल
मातनोति मालिनी। प्रकृतिसुभग गात्रमिति॥

प्रकृतिसुभगगात्रंप्रीतिपात्रंरमायादिशतु-
किमपिधामश्यामलंमंगलंवः अरुण-
कमललीलायस्यपादौदधाते प्रणतहरज
टालीगांगरिंगत्तरंगे॥१॥

वोयुष्मभ्यं पाठकेभ्यः, किमपि अनिर्व
चनीयं, धामस्वरूपं मंगलमभि प्रेतार्थसिद्धिं। दिशतुददा
तु। दिशअतिसर्जने, सम्प्रदानेचतुर्थी। किंभूतं धाम-
श्यामलम् अतसीपुष्पसदृशम्॥ श्यामं कृष्णवर्णं वैशि-
ष्ट्यमस्यास्ति। सिध्म्यादित्वाल्लच्। पुनः किंप्रकारम् प्रकृति
सुभगगात्रम्, प्रकृत्या स्वभावेन सुभगं सुन्दर कांटिकन्द

पलावण्यं गात्रं शरीरं यस्य तत्। प्रकृतेर्गुणसाम्येस्यादस
त्यादि स्वभावयोः योनौलिङ्गे पौरुषेंगी इतिगात्रं गजावग
ङ्गादौ क्लीवमङ्गे कलेवरे इतिच मेदिनीकारः। पुनः कीदृ
शं,रमायाःप्रीतिपात्रम्, लक्ष्म्याहर्षस्य भाजनम्। किंतद्धा
मयस्ययादौ अरुणकमललीलां कोकनद विलासंतच्च
विमिति यावत् दधाते धारयतः। ननुमैघुदोलाय मान
स्यारुण कमलस्य विलासोनु भूयते ननुनिश्चलस्य त
त्राह। कैः, प्रणतहरजटाली गाङ्गरिङ्ग तरङ्गैरिति।
प्रणतः प्रव्ही भूतोयो हरः स्मरहरस्तस्य जटाली सदा
पाङ्कि स्तस्यांयेगाङ्गा गंगासम्बन्धिनो रिङ्गन्त इतस्ततो
गच्छन्तस्तास्तद्दशायें तरङ्गाः स्वल्पोर्मयस्तैः। यद्यपि स्था
मलस्याङ्घ्रि युग्मस्य कोकनदत्वं न सङ्घटते तथापि पा
दतलस्यारुणत्व मङ्गीकृत्योक्तमिति बोध्यम्॥१॥

निजेष्ट देवतां भवानीं लक्ष्मीरूपं पुनर्नमस्कारात्मकं
मङ्गल माचरति। रत्नमिति॥ सूर्य्याश्वैर्मन वस्तताः स
गुरुवः शार्दूलविक्रीडितम्॥

रत्नंवामदृशांदृशांसुखकरं श्रीसप्तशृंगास्प
दं स्पष्टाष्टादशबाहुतद्भगवतोभर्गस्यभा-
ग्यंभजे यद्भक्तेनमयाघटस्तानेघटीमध्ये
समुत्पाद्यते पद्यानांशतमंगनाधरसुधा-
स्पर्द्धाभिधानोद्धुरम्॥२॥

अहं लोलिम्बराजः भर्गस्य सदाशिवस्य भाग्यं प
लोन्मुखीभूतं दैवममानीस्वरूपं, भजेनमामि। कथम्भू
तस्य भर्गस्य भगवतः, ऐश्वर्यादिविशिष्टस्य। ऐश्वर्य
स्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययो

साम्यकरणे वाऽद्भुतम् नद्भुतम् । भतिपक्ष भावः गोवर्द्धनाचार्यः
सत्काव्यरसना सूचितशब्द शालिपाकनृमेन । दयिताधरस्यापि
नाद्रियते का सुधादासीति ॥ इदानीं स्वास्मिन् सूर्यकृपाभाविष्णु
र्वन् प्रतिज्ञां करोति ॥ दिवाकर प्रसादेनेति

दिवाकरप्रसादेन रोगारोग्यसमीहया स-
मासेन वयं कुर्म्मः काव्यं सद्वैद्यजीवनम्

॥ ३ ॥

वयं काव्यं गद्यन्यकुर्मः । एकत्वन प्रयुञ्जीत गुरावा
त्मनि चेश्वर इत्युक्तेर्वयामित्यात्मानि बहुत्वम् । कवेरिदं
कर्म्मकाव्यम् । गुणवचनब्राह्मणादिभ्यः कर्म्मणि चेति ष्यञ् ।
केन समासेन, संक्षेपेण । कया रोगारोग्य समीहया । रुज्यते
पीड्यते देहोऽनेन । रुजेभङ्गे घञ् । रोगश्च दोष वैषम्यम् ।
यथाह वाग्भटः । रोगस्तु दोष वैषम्यं दोषसाम्य मरोगतेति ।
रोगास्यास्तीति रोगी इन् । अरोगो दोषसाम्यम् तस्य भाव
आरोग्यम् । रोगिण आरोग्यस्य समीहया वाञ्छया । यथा
रोगिणो दोष साम्यं स्यात् तथा मनोरथे नेतिभावः । ननु म-
नोरथमात्रेण देहस्वास्थ्यं कथं स्यात् तत्राह । दिवाकर प्र
सादेनेति । सूर्यानुग्रहेण करणभूतेन विवस्वतः कृपयाचा
रोग्य प्रसिद्धम् । यथोक्तं मत्स्यपुराणे । आरोग्य भास्करादि
च्छेद्धनमिच्छेद्धुताशनात् । ज्ञानञ्च शङ्करादिच्छेत् सुरवामि
च्छेज्जनार्दनादिति । यद्वा दिवाकरो नाम लोलिम्बराजस्य
पिता तस्य प्रसन्नतया । प्रसादस्तु प्रसन्नतेत्यमरः । पुत्रस्य
गस्य कर्तृत्व संवेद्य पिता प्रसन्नो भवतीति प्रसिद्धम् । कि
विशिष्टं काव्यम् । सतु समीचीनम् । पुनः सद्वैद्यानां जीव
नम् । यद्वा सन्तः पण्डिता ये वैद्यास्तेषां जीवनं वर्तनं मा

वपघ्यां भगवतीङ्गना । भगोस्यास्तीति भगवान् । तदस्यास्ती
तिमतुप् । तस्य । अनेनभर्गस्य षडैश्वर्यविशिष्टत्वे कारणं
भवानीति सूचितम् । किंभूतंभाग्यम् । वामदृशां वामाशोभना
अतिमनोहरा दृक् दृष्टिर्यासां तासां स्त्रीणांमध्ये रत्नंश्रेष्ठम्
। जातौजातौ यदुत्कृष्टं तद्रत्नमभिधीयते पुनः कीदृशम्
दृशांसुखकरं, दृशापश्यतांवीक्षकाणां सौन्दर्यातिशय
त्वात् हर्षोत्पादकम् । दृकस्त्रियांदर्शने नेत्रे बुद्धौ चात्रेषु
वीक्षके इतिमेदिनीकारः । नैवताद्दृक् क्वचिद्रूपं दृष्टंकेन
चिदुत्तम मितिमार्कण्डेयपुराणम् । पुनः किम्भूतम्, श्री
सप्तशृंगास्पदम्, श्रीमान्सप्तशृङ्गो हिमाचलः, यद्वा-
दक्षिणदेश प्रसिद्धो गिरिविशेषः सएव आस्पदं स्थानंय
स्यतत् ॥ श्रीपदपूर्वत्वन्तु हिमाद्रेः पर्वत राजत्वात् गिरि
विशेष स्याम्बिकास्थानेत्वाद्वा पुनः कीदृशम् स्पष्टाष्टाद
शबाहुः स्पष्टा उल्वणाः अव्यक्ता अष्टादशबाहवोयस्य
तत् । अष्टभुजा दशभुजा अष्टादशभुजा तथा । चतुर्भुजा-
महामाया माहिषासुर मार्दिनीति पुराणागमेषु दर्शनात् श्री
त्याष्टादशसाम्मितेषु युगपद्द्वीपेषु दातुंवरं स्वातुंवाभवती
बिभर्त्ति भगवत्यष्टादशैतान् भुजानिति पुष्पाञ्जल्याञ्ज
। तत् किम् हैघटस्तानि, घटावेवस्तनौ यस्याः तत्सम्बो
धने । यद्वृत्तेन यस्यो पासकेन मया घटी मध्ये घटी प
रिमिते कालेपद्यानां श्लोकानां शत मुत्पाद्यते क्रियते ।
अनेनात्मानि भगवत्यनुग्रहातिशयः सूचितः । किंभूतं
पद्यानां शतम् अङ्गनाधरसुधास्पर्द्धाभिधानोद्धुरम् अङ्ग
नानांस्त्री विशेषाणां वामलोचनानामधरा ओष्ठाः स्त
एवसुधा तयोः स्पर्द्धाभिधाने प्रतिपक्षनामकथने—

णमित्यनन्मीतितात्पर्यम् । मनूसुधीः कोविदो बुधइत्यमरः । अनेन वैश्यशूद्राणां मत्र नाधिकार इतिसूचितम् ॥ ३॥ उत्साह मान्वित्य दुष्टपरकृजनभयं सहृष्टांतमपह्नुराति । तथापीति ।

तथापिक्रियतेग्रन्थः सन्ति यद्यपिदुर्जनाः
नहिदस्युभयाल्लोको दैन्यवानिहवर्तते ॥
॥ ४ ॥

यद्यपिदुर्जनाः परापवादरताः । पिशुनाः सन्ति तथा-पिग्रन्थः क्रियते मयेतिशेषः । ननुदुर्जनेभ्योभेतव्यं, नतत्रदृष्टांतः यथालोको दस्युभयात् चोरभीतेर्दैन्यवान् किंभवति अपितुनभवतितथा । दीनस्यभावोदैन्यम अबुधस्वरूपस्कार्पण्यम् नदस्त्यस्य सदैन्यवान् । नहिसावधानानांचोरभयंभवति तथामसापिसत्कवेर्दुष्टभयं नास्तीतिभावः ॥ ४ ॥ अधुनास्वकपोलकल्पितत्वं परिहरन्नाह । गद गञ्जनायेति ।

गदगञ्जनायचतुरैश्चरकाद्यैर्मुनिभिर्नृणां
करुणयाकथितंयत अखिलंलिखामि
खलुतस्य रहस्यं स्वकपोलकल्पितमिह
स्तिनकिंचित् ५।

चतुरैः कार्य्यकुशलैश्चरकाद्यमुनिभिः नृणां सम्बंधे करुणया कारुण्येनयत् वैद्यशास्त्रं कथितमास्ति । किमर्थं गदगञ्जनाय । रोगाणांनाशाय खलुनिश्चितं तस्य वैद्य शास्त्रस्य अखिलं रहस्यं कृत्स्नं गोप्यमभिप्रायंलिखामि । इहास्मिन् ग्रंथे किंचित् स्वल्पतर मपिस्वकोलकल्पितं स्वयंरचितं नास्ति । आदि शब्दादाग्नि वेशजातुकर्णहारीतादीनां ग्रहणम् ॥ ५ ॥ अस्मिन्ग्रन्थेऽनाधिकारिण

आह । येषामिति । इन्द्रवज्रयाह·

येषांनचेतोल्ललनासुलग्नं मग्नंनसाहि-
त्यसुधासमुद्रे ज्ञास्यंतितेकिंममहाप्रया
सा नधाययथावारवधूविलासान्
॥ ६ ॥

हाइतिखेदे । तेमनुष्याममप्रसासान् मन्त्र करणश्रमान् । किं ज्ञास्यान्ति आपितु न ज्ञास्यान्ति । तेकेयेषांचे नश्चित्तं ललनासुकान्तासुनलग्नम्· साहित्यसुधासमुद्रे च येषां चेतो न मग्नम्· साहित्यंकाव्यं तदेवसुधासमुद्र-स्तास्मिन् । तत्रदृष्टान्तः । यथा अंधा नेत्रहीना वारवध्वाः वे श्यायाविलासान् हाव भेदात् न जानाति । हावभेदा यथा-प्रियसमीपगमनेयः स्थानासन गमन विलोकनेषु विकारो ऽकस्माच्च क्रोधास्मित चमत्कार मुखविकूननं सविलासः । यथाहुः । योबल्लभांचानुगतो विकारो गत्यासनस्थानविलो कनेषु । तथा स्मितं क्रोध चमत्कृती च विकूननञ्चास्यग तं विलासइति साहित्यविदः ॥६॥ भिषकद्रव्याण्यु पस्था तारोगी पादचतुष्टयमिति चतुष्पाद चिकित्सायां वैद्यःप्रथमः पादः । अत आदौ वैद्यस्य लक्षणान्याह । गुरोरिति । उपेन्द्र वज्राजातिस्ततोगौ ।

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः
कुशलक्रियासु गतस्पृहोधैर्यधरःकृ
पालुः शुद्धोधिकारीभिषगीदृशःस्या
त् ॥ ७ ॥

ईदृश ईदृशः भिषक्वैद्यः अधिकारीस्यात् आरोग्य करणेप्रभुर्भवेत् । किंभूतः । गुरोरधीताखिलवैद्यविद्यः

गुरोर्वैद्यविद्योपदेष्टुः सकाशात् अधीता पठिता अखिला अष्टाङ्गा वैद्यविद्या येनसः । वैद्य विद्याया अष्टांगान्याह सुश्रुतः । शल्यंशालाक्यं काय चिकित्सा भूतविद्या कौमारभृत्य मगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति । शरीर नेत्र व्रण रोहणानि विषाणि भूतानि च बालतन्त्रम् । रसायनं पञ्चविधञ्चकर्म अष्टांगमाहुरितियोगशतकम् । नतुचौर्यादिना गृहीत विद्यः । यथोक्तम् । विद्यांगृहीतुमिच्छन्ति चौर्यच्छद्म बलादिना । नतेषां सिध्यते किञ्चिन्माणि मन्त्रौषधादिकमिति । पुनः कीदृशः पीयूषपाणिः पीयूषममृतं पाणौ यस्यसः हस्तसिद्ध इत्यर्थः । पुनः किं विशिष्टः क्रियासुकुशलः अभ्यस्त कर्मा । यथाह वाग्भटः । दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषगिति । पुनः किम्भूतः गतस्पृहः गतास्पृहादीनेभ्यो द्रव्यप्राप्तिवाञ्छा यस्यसः । यदुक्तम् । नतुकुर्वीतलोभेन चिकित्सा पण्यविक्रयम् । ईश्वराणां वसुमतीं लिप्सेतार्थन्तु वृत्तयेइति । पुनः कथम्भूतः धैर्यधरः धरतीति धरः धैर्यस्यधृतेर्धरः स्वयं-धैर्यं धरति रोगिणोपि धैर्यं धारयतीतियावत् पुनश्च कृपालुः दुःखितेषु करुणा शीलः । पुनः किं विशिष्टः शुद्धः वाह्याभ्यन्तर शौचेनपवित्रः । यद्वा । शुद्धावस्त्राभरणादिनोज्ज्वलः । उक्तञ्च । कुचेलः कर्कशः स्तब्धः कुग्रामीस्वयमागतः । पञ्च वैद्यान पूज्यन्ते धन्वन्तरिसमा अपीति ॥७॥

प्रथमतो वैद्यकृत्यमाह । आदावीति ।

आदौनिदानैर्विधिना विदध्याद्व्याधिनिश्चयं ततः साध्यं परीक्षेत पश्चाद्भेषजमुपाचरेत् ॥ ८ ॥

भिषक् चिकित्सकः आदौप्रथमं व्याधिनिश्चयं व्याधेः रोगस्य निश्चय मवधारणे निर्णयं विदध्यात् कुर्य्यात्। यथाह वाग्भटः। व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः। एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुष इति। केनानिदानविधिना निदानोक्त पञ्च प्रकारेण। यथा। निदानंपूर्वरूपाणि रूपाण्युपशयस्तथा। सम्प्राप्तिश्चेतिविज्ञानं रोगाणांपञ्चधास्मृत मिति। ततोरोगपरीक्षानः साध्यं परीक्षेत्। पश्चात् साध्ये ज्ञातेउपाचरेत् चिकित्सेत्। यथाह वाग्भटः। रोग मादौ परीक्षेत् तदनन्तर मौषधम्। ततः कर्मभिषक् पश्चात् ज्ञान पूर्वं समाचरेदिति॥ ८॥

अथज्वरिणो हितमुप दिशति। औषधमिति॥

**औषधंमूढवैद्यानां त्यजन्तुज्वरपीडिताः**
**परसंसर्गसंसक्तं कलत्रमिवसाधवः॥९॥**

भोज्वरपीड़िताःनरा मूढवैद्यानां निदानादि शास्त्रा नभिज्ञ चिकित्सकानां मौषधं त्यजन्तु दूरतः परिहरन्तु। यतः। प्रायश्चित्तं चिकित्साञ्च ज्योतिषं धर्मनिर्णयम्। विनाशास्त्रेणयोब्रूयात् तमाहुर्ब्रह्मघातिनमिति। यथा ब्रह्मघ्न हस्तात् किमपिन गृह्यते वर्णाश्रमिणा तथा मूढ वैद्यस्यापि कस्मादिति भावः सर्वरोगेषु ज्वरस्य मुख्यत्वा ज्ज्वर ग्रहणेन सर्वरोगाणां ग्रहणम्। तत्रदृष्टान्तः। केकिमिव साधवः सज्जनाः कलत्रभार्यामिव। ननुसाधूना मनुचितः कलत्रत्याग स्तत्राह। परेतिकिं भूतं कलत्रं परसंसर्गसंसक्तम्। परपुरुषसङ्गे आसक्ताम्। यथा। स्वच्छंद गामिनीयानारीतस्यास्त्यागोविधीयते। नचैवस्त्रीवधंकुर्य्यात् नचैवाङ्ग विकर्त्तनमित्यागमः॥ ९॥

रोगीजः पथ्यसेवन मेवाहितम् । पथ्याशीनाहि रोगभागीति-
वद्दोनोस्त्यविनौषधि सेवनम् दृथैवेत्याह । पथ्येसतीति-

पथ्येसतिगदार्तस्यकिमौषधनिषेव

णैः॥१०॥

गदार्तस्य रोगिणः पथ्येसति । शास्त्रोपात् पथोऽनपेतं-
पथ्यम् । धर्मपथ्यर्थन्यायादनपेत इतियत् । तस्मिन् सति-
क्रियमाणे । असति अक्रियमाणेच औषधनिषेवणैः किंफलं
न किमपीत्यर्थः । यथोक्तं चरकेन । विनापिभेषजैर्व्याधिः
पथ्यादेव निवर्तते । नतुपथ्य विहीनस्य भेषजानां शतैरपीति
। पथ्येसतीति श्लोकार्द्धं गोमूत्रिकाबंधेन हिरुच्चारिणीयम्
। एकत्रोर्द्धऽसतीतिच्छेदः ॥ १०॥ द्रुतविलंबितेनाह ।

इहगमिष्यतिवैद्यमतिःश्रमंप्रथम-
मेवपुनस्तुमहासुखं प्रियतमस्यमृ-
गाक्षिसमागमे नवकरग्रहणागृहिणी

यथा॥११॥

द्रुतविलंबितमाहनभौभरौ

हे मृगाक्षि । हरिणीनयने । मृगास्य अक्षिणी इव अक्षिणी
यस्याः मध्यमपदलोपीसमासः । इह अस्मिन् ग्रंथे वैद्यमतिः प्र
थम मेव विचार कालएव श्रमंस्वेदं गमिष्यति प्राप्स्यति ।
पुनर्विचारोत्तरं सम्यगर्थे ज्ञाते महासुखं प्राप्स्यति । महच्च
तत् सुखञ्च । आन्महत् इत्यात्वम् । काकस्मिन्निव । यथा
गृहिणीप्रियतमस्य समागमेइव । गृहमस्त्यस्याः अत इनिठन्
विलीन्ङीप् । साप्रियतमस्य अतिशयेनप्रियस्यभर्तुः समा
गमेसमागमोनाम विवाह प्रथम रात्रौ बलाद्रति विनोदः न
स्मिन्निव । कथंभूतागृहिणी नवकरग्रहणा । कृतनूतन पाणि

ग्रहणा नवकर ग्रहण मस्यांसा ॥ ११ ॥
आदौसर्वरोग प्रधानस्य ज्वरस्य प्रतीकारार्थं कविः प्रतिज्ञां करोति । यतइति ।

यतःसर्वेषुरोगेषु प्रायशो बलवान्ज्वरः
अतस्तस्यप्रतीकारंप्रथमंब्रूमहेवयं ॥
॥ १२ ॥

सर्वेषु रोगेषु अतीसारादिषु यतो ज्वरो बलवान् बलिष्ठो मुख्यः । अतएव तस्यैव प्रतीकार मुपायं वयं ब्रूमहे कथयामः ॥ १२ ॥ ज्वरोपायेषु लङ्घनस्य प्राधान्य माह । अधुनेति

अधुनाशृणुतान्विलंघनंज्वरितानांप्र
थमप्रशस्यते ततःपादपथान्यथा
वनौ मुगाविश्वौषध पाचनं ततः १३

हेतान्वि अधुना सम्प्रतित्वं शृणु मद्वचन मवधारय । किंतत् ज्वरितानां सञ्जातज्वराणाम् । ज्वरः सञ्जातोयेषाम् । तेज्वरिताः तदस्यसञ्जातामिति तारकादित्वादितच् । ज्वरस्य-विप्रकृष्ट कारणकथन पूर्विका सम्प्राप्तिर्यथा । मिथ्याहारविहारस्य दोषाह्यामाशयाश्रयाः । बहिर्निरस्य कोष्ठाग्निं ज्वरदाःस्युरसानुगाइति ॥ तस्यसामान्यलक्षणंयथा । स्वेदावरोधः सन्तापः सर्वांग ग्रहणं तथा । युगपद्यत्ररोगेतु सज्वरोव्यपदिश्यते इति । तस्यपूर्वरूपं यथा श्रमोरति विवर्णत्वं वैरस्यं नयनप्लवः । इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु । जृंभाङ्ग मर्दोगुरुतारोमहर्षो ऽरुचिस्तमः ॥ अप्रहर्षश्च शीतञ्च भवन्त्युत्पत्स्यति ज्वरे इति ॥ ज्वरितानां प्रथमंपूर्वं लघनं प्रशस्यते अनशनं प्रशस्तं विहितम् । यथाज्वरादौ प्रकुर्वीत प्रथमंवात वर्जनम् । लङ्घनञ्चोष्ण पानीयमिति । ततः पादप

कज्वरेषु । सुरपादपादिपञ्चाभिः पाचनार्थं क्वाथः । तत्रसुर
पाद पादेवदारु १ धान्यंधन्याकम् २ धावनीयुग ३ कण्टकारी
द्वयम् ४ विश्वौषधंशुण्ठी ५ । तत्रज्वरपाकलक्षणम् आस
प्तरात्रात् तरुणंज्वर माहुर्मनीषिणः । मध्यचतुर्दशाहान्तं पु-
राणमतउच्यते । त्रिसप्ताहे व्यतीतेतुजीर्णसंज्ञांलभेतसइति
। एतच्चसर्वज्वरेपाचनम् । यथोक्तमन्यत्र । नागरदेवकाष्ठञ्च
धन्याकं बृहती द्वयम् । दद्यात् । पाचनकंपूर्वंज्वरिताय ज्व
रापहामीति ॥ पाचनद्रव्याणां परिमाणंयथा । दशरक्तिकमा
षेण गृहीत्वातोलकद्वयम् । दत्वाम्भः षोडशगुणंग्राह्यं पा
दावशेषितमिति वैद्यकपरिभाषा ॥ तत्रक्वाथविधिरुक्तो-
भावप्रकाशे । पानीयं षोडश गुणं क्षुण्णद्रव्यपलेक्षिपेत । मृ
त्पात्रेक्वाथयेत्ग्राह्यम् मष्टमांशाऽवशेषितम् ॥ कर्षादौतुप
लंयावत् दद्यात् षोडशकंजलम् । तज्जलंपाययेद्धीमान्
कोष्णंमृद्वग्नि साधितम् । श्रृतः क्वाथः कषायश्च निर्यूहः
सनिगद्यते । क्वाथ पान मात्रा माह । मात्रोत्तमा पलेनस्यात्
त्रिभिरक्षैस्तु मध्यमा जघन्याच पलार्द्धेनस्नेह क्वाथौषधेनच
। तन्त्रान्तरे । क्वाथद्रव्यपलेवारि द्विरष्ट गुणमिष्यते । चतुर्भा
गावशिष्टन्तु पेयंपलचतुष्टयम् ॥ दीप्तानलंमहाकायं पाय
येत् द्विपलंजलम् । अन्येत्वर्द्धं परित्यज्य प्रस्तुतन्तु चिकि
त्सकाः क्वाथत्याग मानिच्छन्त स्त्वष्टभागावशेषितम् । पा
रम्पर्योपदेशेनवृद्धवैद्याः पलद्वयम् । अष्टभागावशेषितस्य-
चतुर्भाग अवशिष्टा पेक्षया गुरुत्वात् दीप्तानलंमहाकायं पलद्व
यपाययेत् मध्व मग्नि मल्पकायं पलमात्रं पाययेत् । मा
त्रोत्तमा पलेनस्यादित्यादिवचनात् । क्वाथेक्षिपेत सितामंशै
श्चतुर्थाष्टम शोडशैः । वातपित्त कफा तङ्क विपरीतं मधुस्मृतं

जीरकं गुग्गुलं क्षारं लवणञ्चशिलाजतु । हिङ्गुत्रिकुटकञ्चैव क्राथेशाणोन्मितं क्षिपेत् । क्षीर घृतं गुडं तैलं मूत्रचान्यदद्रवं तथा । कल्कं चूर्णादिकं क्राथे निक्षिपेत् कर्षसम्मितम् । ततो पविश्य विश्रान्तः प्रसन्नवदनेक्षणः । औषधं हेमरजत मृद्भाजनपरिस्थितम् ॥ पिबेत् प्रसन्न हृदयः पीत्वापात्र मधोमुखम् विधायाचम्यसलिलं ताम्बूलाद्यूपयो जयेदिति ॥

## भाषाटीका

पहिले सातदिन ज्वरी कूं लंघन कराय के देवदारु धानिजा· छोटीबड़ीभटकैया· और सौंठ ये सब वस्तु दो तोला लेकर सोलह गुने जल में क्राथ करै- पीछे जबाके चौथाई पानी रहजावै तब उतार ले और मन्दोष्ण रहने अर्थात् थोडा गुनगुना होने पर पिलादे इसी प्रकार तीन तथा पांच दिन पान कराया जाय तो- ज्वर पचके नष्ट होजायगा· ॥ १३ ॥

अथ क्रमेण वात पित्त कफ ज्वरेषु त्रीन् क्राथान् प्रदर्शयस्यादिन्द्र वज्रायादिनो जगौगः ग्नाह । छिन्नाते ।

छिन्नौषधांभोधरधन्वयासैः किरात तिक्ताबुदरेणुयासैः विश्वावृषाभोधरधन्वयासैः कृवाथोमरुत्पित्तकफज्वरेषु ॥ १४ ॥

छिन्नागुडूची १ औषधं शुण्ठी २ अम्भोधरो मुस्ता ३ धन्वयासो दुरालभा । एतेश्चतुर्भिर्वातज ज्वरेक्काथः । किरातोभूनिम्ब १ तिक्ताकटुकी २ अबुदोमुस्ता ३ रेणुः पर्पटः ४ यासायवासः ५ पञ्चाभिः पित्तजेज्वरे । विश्वाशुण्ठी १ वृषो वासकः अम्भोधरो मुस्ता ३ धन्वयासो धमासक ४ श्चतुर्भि

कफजे ज्वरे क्वाथः पाचनार्थं देयः । तत्र वातकादि ज्वराणां क्रमेण लक्षणानि यथा ॥ वेपथुर्विषमोवेगः कण्ठोष्ठ परिशोषणम् । निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेवच । शिरो हृद्गात्ररुग्वक्त्र वैरस्यं गाढविट्कता । शूलाध्माने जृम्भणञ्च भवन्त्यनिलजेज्वरे ॥ १ ॥ पैत्तिकस्य तस्य लक्षणं यथा । वेगस्तीक्ष्णोतिसारश्च निद्राल्पत्वं तथावमिः । कण्ठोष्ठ-मुखनासानां पाकः स्वेदश्चजायते ॥ प्रलापो वक्त्रकटुता मूर्च्छादाहोमदस्तृषा । पीतविण्मूत्रनेत्रत्वं पैत्तिकेभ्रमस्वच ॥ २ ॥ श्लैष्मिकस्यास्य लक्षणं यथा । स्तैमित्यं स्तिमितोवेग आलस्यंमधुरास्यता । शुक्लमूत्रपुरीषत्वं-स्तम्भस्तृप्तिरथापिच । गौरवंशीतमुत्क्लेदो रोमहर्षोति-निद्रता । प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥ वातपैत्तिकस्यास्य लक्ष णंयथा । तृष्णामूर्च्छा भ्रमोदाहः निद्रानाशःशिरोरुजा । कण्ठस्यशोषोव मथू रोमहर्षोऽरुचिस्तमः ॥ पर्वभेदश्च जृम्भाच्च वात पित्त ज्वरा कृति रिति ॥ वातश्लैष्मिकस्यास्य लक्षणंयथा । स्तैमित्यं पर्वणांभेदोनिद्रागौरव मेवच ॥ शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम् । सन्तापो मध्यवेगश्च । वातश्लेष्म ज्वराकृतिरिति ॥ पित्तश्लैष्मिकस्यास्य लक्षणं यथा । लिप्ततिक्तास्यता तन्द्रा मोहः कासोरुचिस्तृषा । मुहुर्दाहो मुहुः शीतं पित्तश्लेष्म ज्वराकृतिरिति ॥ ÷ ॥÷ सान्निपातिकस्यास्य लक्षणंयथा । क्षणेदाहः क्षणेशीत मस्थिसंधिशिरोरुजा । सास्रावे कलुषेरक्ते निर्भुग्नेचापि लोचने । स्वसनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः । तंद्रा मोहः प्रलापश्च कासःश्वासोऽरुचिर्भ्रमः । परिदग्धाखरस्य

र्शोजिह्वास्वस्ताङ्गतापस्य। ष्ठीवनंरक्तपित्तस्य कफेनोन्मिश्रितस्य च। शिरसोलोठनंतृष्णा निद्रानासो हृदिव्यथा। स्वेदमूत्रपुरीषाणं चिराद्दर्शनमल्पशः॥ कृशत्वंनातिगात्राणां प्रततं कण्ठकूजनम्। कोठनांश्यावरक्तानां मण्डलानाञ्चदर्शनम्॥ मूकत्वंस्त्रोतसं पाको गुरुत्वमुदरस्यच। चिरात् पाकश्चदोषाणां सन्निपात ज्वराकृते रिति। असाध्यस्यसान्निपा त कस्यास्य लक्षणं यथा। दोषेविरुद्धेनष्टेग्नौ सर्वसम्पूर्णलक्षणः। सन्निपातज्वरो ऽसाध्यः कृच्छ्रसाध्यस्ततोन्यथा॥ सप्तमे दिवसे प्राप्ते दश मेद्वादशेपिवा। पुनर्घोरतरोभूत्वा प्रशमंयातिहान्तिवा। सप्तमाद्द्विगुणाचैव नवम्येकादशीतथा॥ एषात्रिदोषमर्यादा-मोक्षायचबधायच॥ सान्निपातज्वरस्यान्ते कर्णमूलेसु दारुणः। शोथः संजायतेतेन कश्चिदेवप्रमुच्यते। इति माधवकरः।

## भाषाटीका

वात के ताप में- गिलोय· सोंठ· मोथा और धमासा जिसे जवासा भी कहते हैं· इन चार चीज़ों का क्वाथ पीवे- और पित्त के ताप में चिरायता· कुटकी ·मोथा· पित्तपापडा· औरजवासा इन पाचों का क्वाथ अर्थात् काढ़ा पीवे- और कफ़ के ज्वर में· सोंठ, अडूसा· मोथा और जवासा इनचारों वस्तुओं का-काढ़ा पीवैतो कफ़ज्वर जाय॥ १४॥

÷। पुनश्चवातज्वरे श्लोकाभ्यांकषायमाह। पीयूषेति।

पीयूषवल्लीकपाचाल्हीवरणानांकषाय
कः पीयमानःप्रियहन्ति हनुमज्ज
नवज्वर॥ १५॥

हेप्रियेन्द्रियाणां पीयूषलोकपांचालीचरणानां पीयमान:क्व
थ्यक: हनुमज्जनकज्वरहान्ति। पीयूषं गुडूची लोक:शु
ण्ठी। पाञ्चालीचरण:। पिप्पलीमूलम्। पाञ्चाली मागधी
करोति। निघण्ट:। हनुमतोवानरस्य जनक: पितावायुस्तस्य
ज्वर: नाशयतीत्यर्थ:॥

## भाषाटीका

गिलोय, सोंठ, और पीपरामूल इनतीन का क्वाथ वा
तज्वरको नष्ट करैहै ॥१५॥ उशीरेति-

उशीरकलशीमहौषध।किरातकाम्भो-
धरास्थिरा दृहतिकाद्वयामृतलता।त्रि
कण्टै: कृते कषायकम्मुपिवेत्
पवनजज्वरव्याकुल:पुमान्दशशत
च्छद च्छद मदगनसल्लोचने॥१६॥

हे दशशतच्छदच्छदमदगनसल्लोचने दशशतंछदा: प
त्राणि यस्य स दशशतच्छद: सहस्रपत्रं कमलं तस्य च्छद:
पत्रं तस्यमदं सौदर्याभिमानं गनसति हतं गनसत्। गनसन्तीलो
चने यस्या: सातत् सम्बोधने दशेत्यादि। पवनजज्वरव्या
कुल: वातजनितज्वरेण विव्हल: पुमान् अमुमुशीरादि दशभि:
कृतं कषायकं पिवेत्। तत्र उशीरं जलाशयं वीरेण मूलमि-
तियावत्१ कलशीपृश्निपर्णी२ महौषधंशंठी३ किरातकोभूनि
म्ब:४ अम्भोधरोमुस्ता५ स्थिराशालिपर्णी६ दृहतिकाद्वयं७
कण्टकारीयुग्मम्८ अमृतलतागुडूची९ त्रिकण्टकोगोक्षुर: १०॥

## भाषाटीका

खस, कलसी, सोंठ, चिरायता, नागरमोथा, शालपर्णी, दोनों कटेरी, गिलोय, गोखरू ... मध्यदेशभाषा ... सोंठ चिरायता

मोथा· शालपर्णी· दोनोंकटेरी· गिलोय· गोखुरू· इन दश के क्वाथ कूं वातज्वरी पीवै तो वातज्वर जाय ॥ १६ ॥

अथवातापित्तज्वरोपशमायपंचभद्रनामानंकषायमाह॥छिन्नोद्भवेति

छिन्नोद्भवापर्पटवारिवाहभूनिंबशुंठी ज्जनितःकषायः समीरपित्तज्वरज र्जराणांकरोतिभद्रंखलुपंचभद्रः १७

समीरपित्तज्वरजर्जराणां वातापित्तजज्वरेण व्याकुलानां नराणां छिन्नोद्भवादिभिः कृतः पञ्चभद्रनामाकषायः खलुनिश्चयेनभद्रं कुशलंकरोति। तत्राछिन्नोद्भवा गुडूची १ पर्पटः तिक्तम् २ वारिवाहःमुस्तकः ३ भूनिम्बः किरातः ४ शुण्ठीशृङ्गवेरम् ५॥

भाषाटीका

गिलोय· पित्तपापड़ा· मोथा· चिरायता· औरसोंठ इनका काढ़ा पीनेसे वातापित्त का ज्वर नष्ट होय १७

॥अथपित्तज्वरेकषायमाह।मृगमदेति॥

मृगमदविलसल्ललाटमध्ये मृगमद हारिणिलोचनद्वयेन मृगनृपतितनू दरिश्रीपित्तज्वरमेहहृद्यातिरेणवःकषा यः॥ १८ ॥

हे मृगमदविलसल्ललाटमध्ये· मृगमद कस्तूर्याविलसत् शोभमानं ललाटस्य मध्यंयस्याः। पुनःकिम्भूते हे मृगमदहारिणि· मृगयोर्मदोनेत्रचाञ्चल्यरूपस्तम्पहर्तुं शीलमस्याःसा· तत्संबोधने केनलोचनद्वयेन। द्वौअवयवौ यस्य तद्द्वयम्। संख्याया अवयवेतयप्। द्वित्रिभ्यांतयस्यायज्वा। लोचनयोर्दर्शनसाधनयोर्नेत्रयोर्द्वयम् - तेन। पुनश्च हे मृगनृपति तनूदरश्री· मृगाणांनृपतिः सिंहः तस्ययत् तनुसूक्ष्ममुदरंतस्य श्रीशोभायस्याः

मा । त्रीणिसम्बोधनानि परिचित कथनायेति भावः । रेणवः कषा यःरेणोः पर्पटस्यायरेणवोनिर्यासःपित्तज्वरं घ्नातिहान्ति त्यह इः अद्भुतम् ॥ १८ ॥

एकएवखलुपैत्तिकज्वरंहन्ति पर्पटक तःकषायकः चन्दनोदकमहौषधा-न्वितश्चेत्तदा किमुपुनर्विचारणा ॥ १९ ॥

अयं श्लोक क्षेपकःकस्मिंश्चित् पुस्तके दृश्यतेऽतोस्यापि व्याख्यायते । एकएवेति । पूर्वार्द्धं उक्तार्थं एव । रक्तचंदनं । ताम्रसारकम् । महौषधंशुंठी । आभ्यामन्वितो युक्तश्चेत्तदा पैत्तिकज्वरं हन्तीत्यत्र पुनः विचारणा प्रमाणंसत्वपरीक्षा किमु । अत्रापि विमर्शःकिम् । उक्तंच । एकःपर्पटकः श्रेष्ठःपित्तज्वरविनाशनः । किम्पुनर्यदियुज्येत चन्दनोदीच्य नागरैरिति ॥

भाषाटीका

अकेले पित्तपापड़े को काढ़ा पित्तज्वरकूं नष्ट करैहै और जो वामें रक्तचंदन तथा सोंठ भी मिलाय के करै तो कहा कहनी ॥ १९ ॥

द्राक्षापर्पटराजवृक्षकटुकामुस्ताभया-नांजलं मूर्च्छाशोषविदाहतृड्भ्रमप्रलपन भ्रान्त्याढ्यपित्तज्वरे दुस्पर्शप्रमदा-किरातकटुकातिक्तास्यरेणूद्भवः क्वाथः शर्करयान्वितो हरति तृट्दाहास्त्रपित्तज्व-रान् ॥ २० ॥

द्राक्षादिपञ्चांगजलं क्वाथं मूर्च्छादियुक्ते पित्तज्वरेदेयम् । तत्रद्राक्षा गोस्तनी १ पर्पटःसुप्रसिद्धः २ राजवृक्षः आरग्वधःवा ३ कटुकाकटुरोहिणी ४ मुस्तामुस्तकः ५ अभयापथ्याहरीतकी ६ मूर्च्छामो

इयेनन्नरः काष्ठवत् पतितशोषः यक्ष्मा । निदाघः स्वेदः । तृट्उद न्या । प्रनपलम् प्रलापः । भ्रान्तिभ्रमः । यथोक्तम् । द्राक्षाभया पर्पटकाब्दातिक्ता क्वाथंसमस्पाककफलंविदध्यात् । प्रलाप मूर्च्छाभ्रमदाहशोष तृष्णान्वितेपित्तभवेज्ज्वरेत्त इति ।

## भाषाटीका

दाख· पित्तपापडा· सोनालु जिसे इतरजन अमल- तासकहतेहैं· कुटकी· मोथा· और हरड इन छैःची ज़ोंका काढ़ा· मूर्च्छा· राजयक्ष्मा· पसीना· प्यास· बरडाव ना· औरभ्रांतिइनसंयुक्तजो पित्तज्वर वाकूंनष्टकरे ॥

दुस्पर्शोयवासः । प्रमदा· प्रियङ्गुः । किरातोभूनिंबः । कटुका कटुरोहिणी । सिंहास्योवासकः । रेणुः पर्पटः । स्तेषांयःक- षायः शर्करयान्वितः सितासंयुक्तः पीतः तृट् दाहास्त्रपित्तज्व रान् हरति दूरी करोति । तत्क्वाथेसिद्धे पूते अर्द्धपलोन्मिता शर्करापश्चात् प्रक्षेप्तव्या । यथोक्तम् । क्वाथेक्षिपेत् सितामंशैस्त्व तुर्थाष्टमषोड़शैः । वातपित्तकफा तङ्के· विपरीतंमधुस्मृतमि ति । अंशेवंक्रमः । वातातङ्केसिताक्वाथेत जलाच्चतुर्थीशा प्रक्षे प्या । पित्तातङ्केअष्टमांशा कफातङ्केषोड़शांशा शर्कराप्रक्षेप्तव्या । मधुनिविपरीतक्रमः । यथा । वातातङ्केशोडशांशंमधु । पित्त तंकेअष्टमाशं कफातंके चतुर्थांशं मध्वित्यर्थः । तृट् तृषा । दा होगात्र सन्तापः । अस्त्रपित्तं· रक्तपित्तम् । ज्वरः पित्तज्वरः प्र- करणात् । एकस्मिनव्याधौ योगद्वयमनेन श्लोके नोक्तंबोध्यम् ·

## भाषाटीका

जवासा· कमुनी· चिरायता· कुटकी· अडूसा· औरपित पापड़ा· इन छओंका क्वाथ· तृषा· शरीरमेंदाह· अस्त्रपित रोग· औरपित्तज्वर इनकूं नष्टकरे ॥ २० ॥ अहोइति

अहोकिमर्थंबहुभिःकषायैः पराशराद्यैः मुनिभिःप्रदिष्टैः छिन्नाशिवापर्पटतोय पानात्पित्तज्वरःकिंनसरीसरीति॥२१॥

अहोइति विस्मये। पराशराद्यैर्मुनिभिः प्रदिष्टैः प्रदर्शितैर्ब हुभिः कषायैरनेकैः क्वाथैः किमर्थम् किंप्रयोजनम्। यतः छिन्नाशिवापर्पटतोयपानात् पित्तज्वरः किंनसरीसरीति अ तिशयेन नगच्छतिकिम् अपितुगच्छत्येव। तत्रछिन्नागुडूची शिवाधात्री। पर्पटो रेणुः एषांक्काथस्यपानात् पित्तज्वरोवश्यं गच्छतीत्यर्थः। उक्तञ्चपर्पटामृतधात्रीणांक्वाथः पित्तज्वरजये दिति-

## भाषाटीका

गिलोय आमरा औरपित्तपापड़ाइनका काड़ापी ने से पित्त ज्वर अवश्य नष्ट होय॥२१॥

॥अथपित्तश्लैष्मिकज्वरे क्वाथमाह। लोहितेति॥

लोहितचंदनपद्मकधान्यच्छिन्नरुहा पिचुमन्दकषायः पित्तकफज्वरदाह पिपासावांतिहुताशविनाशहरःस्यात्॥२२

लोहितचंदनादीनांक्वाथः पित्तकफज्वरादीनांनाशकोभव ति। तत्रलोहितचंदनंकुचंदनम्। पद्मकपद्मकाष्ठम्। धान्यंकु स्तुम्बुरु। छिन्नरुहाअमृता। पिचुमन्दोनिम्बः। कीदृशःकषायः। पित्तकफज्वरदाहपिपासावान्तिहुताशविनाशकरः। तत्रपि त्तकफाभ्यांसहितोज्वरः। पित्तकफज्वरः शरीरोष्मावा। पि पासाउदन्यावान्तिःउद्वेवनम्। हुताशविनाशः जाठराग्नि- मान्द्यम्। एतानिहरतीदृशः। उक्तञ्च। गुडूचीनिम्बधन्या कम्पद्मकंरक्तचंदनम्। एषसर्वज्वरान्हन्ति गुडूच्यादिस्तु दीपनः॥हल्लासारोचकच्छर्दीपिपासादाहनाशनः इति॥

## भाषाटीका

रक्तचंदन·पद्माककीत्वचा·धानेआ·गिलोय·औ
रनींच इनका काढा पीनेसे पित्त और कफसे जन्माजो
ज्वर और प्यास बमन और मदाग्नि येसबनष्ट होंय २२

सदाहज्वरादौ क्वाथमाह । जलजलजेति ॥

### जलजलजजलवाहरेणुविश्वौषधः शिशिरः शिशिरं जलमृतं स्यात् सपदि सुखकरं सदाहदाहज्वर तृषियोज्यामि दं नवज्वरेपि २३

जलादिषड्भिः शृतं क्वथितं तज्जलं पश्चात् शिशिरं जलं शीतं कृत्वा सदाहज्वरतृषि पिबतः सपदि तत्क्षणं स्वसुखकरं-स्यात् । यथोक्तं चक्रपाणिदत्तेन । विश्वाम्बुपर्पटोशीरघन चंदनसाधितम् । दद्यात्सुशीतलंवारि तृट्छर्दिज्वरदाहनुदि ति ॥ इदंपित्तजे नवज्वरेपि सदायोज्यम् । पैत्तिकेवाज्वरे देयं·म-ल्पकालसमुत्थिते इत्युक्तेः ॥ तत्रजलम्·ह्रीवेरम् । जलजः मुशीरम् । जलवाहोमुस्ता । रेणुः पर्पटः । विश्वौषधं शुंठी । शिशि रंरक्तचंदनम् । कषायपानयोर्योज्यं चंदनंरक्तचंदनमित्युक्तेः । शिशिरजलम् शिशिरंजलंयस्य एताद्दृशमिति शृतमित्यस्य विशेषणम् । सदाहज्वरतृषि दाहेन सहवर्तमानो यो ज्वरः त-स्मात् या तृट् तस्यामित्यर्थः ।

## भाषाटीका

दाह के साथ ऐसे ज्वरमें जो प्यासहोय तो सुगंधिवा ला वीरणमूल जिस्को खस कहते हैं· मोथा·पित्तपापडा· सोंठ·औररक्तचंदन इनका काढाकरै· जब शीतल होजाय तब पिवावै· तो ज्वरकी तृषा नष्टहोय- औरयही क्वाथ

शीतलकरके नये पित्तज्वर में भी पीने को वैद्य देय २३

सहस्रेति।

**सहस्रधौतेनघृतेनकर्तुरभ्यंगयोगःकृ शतांविभर्त्ति अन्यांगनासंगमसादर स्यस्वीयपुदारेषुयथाभिलाषः२४**

घृतेन·पक्वनवनीतेन आज्येन अभ्यंगयोगः म्रक्षणसंयोगः कर्तुर्दाहस्य· कृशतां दौर्बल्यं विभर्ति· दाहस्य नाशं करोतीति भावः। कीर्य्यते विक्षिप्यते इतस्ततश्चाल्यते कायो येन स कर्ता दाहः कृविक्षेपेण्वुल् तृचावितितृच्। कीदृशेन घृतेन सहस्र धौतेन· सहस्रावृत्त्या सहस्रवारं प्रक्षालितेन। तत्र दृष्टांतः अन्यांग नासङ्गमसादरस्य·परयोषायांसक्तस्यापि स्वस्वीयेषु दारेषु आत्मीयभार्यायामभिलाषो यथा वाञ्छेव। इवार्थोत्र यथा शब्दः

## भाषाटीका

सहस्रवार धोयेहुवे घीके मर्दन करनेसे· दाहाके जै सें मनुष्य हाथपांवों को जलनके मारे इतउत फेंकता होय तो ऐसे दाह को जलन अवश्य शांति होय॥२४॥

अमलैकमलैरिति·

**अमलैःकमलैरथानिलैरसैःपुष्पर- सैःसमन्वितैः जलकेलिकृथाकृत हलैरपि पित्तज्वरजारुजोजयेत॥२५॥**

वैद्यः एतैर्वक्ष्यमाणै रपि पित्तज्वरजाः पैत्तिकज्वरोद्भवाः रुजः तृड्दाहादीन् आमयान् जयेत्· एषामभिभवेनोत्कर्षं स्वी कुर्यात्। कैस्तत्राह। अमलैरिति। अमलैरजोरहितैः सद्योवि कासितैः सहस्रपत्रैः पुनश्च पुष्परसैः समन्वितैः मकरन्द युक्तैः एतादृशैः अलसैर्मन्दैः अनिलैः शीतलैर्वायुभिःपुनःकी

। जलकेलिकथाकुतूहलैः जलैर्नद्यादिसलिलैर्याः केलयः क्रीडांतासांनौकादिष्वारोहणंकृत्वाऽवलोकनेन नतस्वयमज्जनेन। कथाभिः प्रबंधकल्पनाभिः। कुतूहलैः अपूर्ववस्तुदिदृक्षाद्यतिशये चेष्टाविशेषैः स्तैरित्यर्थः॥

## भाषाटीका

फूलेकमल मन्दमन्द सुगंधालिये ऐसे शीतलपवन जलक्रीडाजो यात्युष्ठी। जिसे छींटाछींटी छींटम् छींटा कहतेहैं वाकरिकेवयस्यों काजोखेलना उसका देखना नानाप्रकारकी जोकथावार्ता औरकुतूहल जोविस्मयकोउत्पन्नकरेंऐसे कौतुकों का देखना इनकरके भीवैद्यापित्तज्वरसेजन्में जोप्यास औरदाह आदि उनको जीते॥ २५॥

श्रीखण्डेति

**श्रीखंडमंडितकलेवरवल्लरीणां मुक्ताफलाकुलविशालकुचस्थलीनां। वैदग्ध्यमुग्धवचसां सुविलासनीनां मालिंगनं सकलदाहमपाकरोति॥ २६॥**

सुविलासनीनां लीलावतीनाम् यद्वाविलासो हावविशेषताद्विशिष्टानां शोभनस्त्रीणांयत आलिंगनमुपगूहनंतत् पित्तज्वर जनितं सकलदाहं पूर्वलक्षणं गात्रसन्तापमपाकरोति निराकरोति। कीदृशानां। सुविलासनीनां श्रीखंडमंडितकलेवरवल्लरीणाम् श्रीखण्डेनचन्दनेन मंडिताअलंकृताकलेवरवल्लरी शरीरलतायासां तासाम्। पुनःकिम्भूतानां मुक्ताफलाकुलविशालकुचस्थलीनाम् मुक्ताफलैरिन्दुरत्नैः आकुलाव्यस्ताव्याप्ता विशालापृथुला कुचस्थलीस्तनपरिधियासांतासाम्। पुनःकीदृशानाम् वैदग्ध्य मुग्धव

चनमासु वैदग्ध्येनदाक्ष्येण मुग्धंमनोहरंवचोवचनंयासां तासांमित्यर्थः॥

भाषाटीका।

चन्दन करके शोभायमानहैं शरीरलताजिनकी और मोतीनकी मालान करके छायेभयेहैं विशालकुच मंडलाजिनके। और चतुराई केसाथ मनकेहरनेवाले हैं बचनाजिनके ऐसी सुघड़ नारीनको जो आलिंगन सोपित्तज्वर केसारे दाहको दूरकरे ॥२६॥

शय्येति

शय्यापल्लवपद्मपत्ररचिता वासोवय-
स्यैःसमं कांतारेकुसुमस्फुरत्तरुवरे-
वीणान्वितंगायनं। आलापास्त्वशका
लिकोकिलकृताःकांताश्चकांताःकथा
वाताश्चामलयाःकुर्वन्ति जनजादाघानि
राकुर्वते॥२७॥

एतेशय्यादयः दाघंदह्यतेकायोऽनेन दहभस्मीकरणे हलश्चेतिघञ् न्यंक्वादित्वात् कुत्वम् दाघोदाहस्तं निराकुर्वते दूरीकुर्वन्ति। केतेतत्राह। पल्लवपद्मपत्ररचिता शय्या पल्लवानि कदल्याःकिसलयानि नूतनानिपत्राणि पद्मपत्राणि कमलदलानि तैरचितानिर्मिताशय्या संस्तरः। दाहार्दितं कंजकदलीदलसंस्तरे इत्युक्तत्वादनुक्तापिकदली योज्या। पुनश्चकुसुमस्फुरत्तरुवरे कुसुमैः सुमनसैः स्फुरन्तः प्रकाशमानास्तरुवराः श्रेष्ठवृक्षायत्र तस्मिन् कान्तारे वनेवयस्यैः सवयोभिः स्निग्धैः समंसार्द्धं वासोऽवस्थानम्। पुनःवीणान्वितं गायनम्। वल्लक्यामिलितंगायनम्

गायकंगानंवा। भूयश्च शुककालिकोकिलकृताआलापाश्च शुकाश्च· अलयश्च· कोकिलाश्चते· तत्रशुकाःप्रियदर्शिनाः कीराः। अलयाभ्रमराः। कोकिलाः वनप्रियाः। एतेषामालापाः आभाषणानि। पुनश्चकान्ताः कान्ताःमनोरमाः सर्वाङ्गसुन्दर्योनार्यः। कान्ता इत्युभयान्वयि। तेन कान्ताः कथाः मनोरमाः प्रबंधकल्पनाः। यद्वाकांताःस्त्रियः। कांताकथा इत्येकंपदम्· तेनकान्तानांस्त्रीविशेषाणां-कथाः शृङ्गाररसोत्तराः गोष्ठ्यः संलापाः भूयश्च। अमल-बालक व्यजनजाः वाताः· अमलंनिर्मलं· बालकंस्वल्पं यत् व्यजनं तस्माज्जाता एतादृशावाताः॥

## भाषाटीका

येसबभीपित्तज्वर के दाह कूं दूर करें हैं· येकौंन· कदलीपत्र वा पद्मपत्र इनसेरची शय्या अर्थात् इनकी सांथरा; और फूलों से शोभावान् वृक्षों के वनमें समान अवस्थावालों के साथ बास, और वीणा संयुक्त गायन् और तोते भौंरे तथा कोकिला आदि पक्षीगणों के शब्द और बातन में चतुर मन के हरनेवाली नारीन की बातें और खस और बस्त्र आदि के बने निर्मल बीजनों की हवा ये॥२७॥

तृडित

तृट्दाहमोहाःप्रशमंप्रयांतिनिंबप्रवा-
लोत्थितफेनलेपात् यथानराणांधनिनां
धनानिसमागमाद्वारविलासिनीनाम्॥२८

निम्बप्रवालोत्थितफेनलेपात्। निम्बस्यसर्वतो-भद्रस्य प्रवालान्यग्निनवपत्राणि। किसलयानि· तेभ्यःउत्थितः उत्पन्नोयः फेनोजलहासः तस्यलेपात् लेपनात् निम्बप

त्राणां स्वरसो मन्थनीयस्तस्माद्यः फेनउत्तिष्ठति समर्दो इति । सः तन्मर्द्दनात् तृट्‌च दाहश्च मोहश्चतेः प्रशमशमतां भ्यान्ति प्राप्नुवन्ति । कस्मात् कामीव वारविलासिनीनां वारजनसमूहे विलसनशीलानां निर्ल्लज्जानां वेश्यानां समागमात् सङ्गात् मिथुनीभावाद्वा धनिनां धनसम्पन्नानामाढ्यानं नराणां धनानीव वित्तानि यथा । वारः सूर्यादि वासरे । द्वारे हरे कुब्ज वृक्षे वृन्दावसरयोः क्षणे इति मेदिनीकरः ।

## भाषाटीका

नींब के कोमल पत्तों को कूट के वस्त्र से निचोइ के उ सरस कूं मथे और उससे उठगो फेन उसके मर्दन करने से ज्वरकी प्यास, शरीर का दाह मोह और मूर्च्छा ये सब शांत होंय जैसे वेश्यान के संगते धनी पुरुषों का सब धन नष्ट होय है तैसे

२८ पुनश्च तापप्रतीकारमाह । अयीति

अयि नितम्बिनि गायन लालसे मधुरचारिणि काममदालसे इरति दाहमयं घर्मकरानने हिमहिमांशुकजलैरनुलेपनम् ॥ २९ ॥

सम्बोधने अयीति । हे नितम्बिनि नितम्बः स्त्रियाः पश्चात् कटितटः सा विशालोस्त्यस्याः अतइनिठना वितीनिः ङीप् तत्संबोधने नितम्बिनीति हे निविड़ नितम्बे । हे गायन लालसे गायने लालसा महानाभिलाषो मनोरथोऽस्याः सा तत्संबोधने । पुनः हे मधुरचारिणि मधुरं नितम्बस्य भरेण गजवन्मन्दगमनेन प्रियं चरितुं शीलमस्याः तत्संबोधने हे काम मदालसे कामेन रिरंसया यो मदो हर्षोन्मत्तता वा तेन अलसा क्रियासां मन्दे आलस्य युक्ते इति यावत् । पुनश्च हे असमर्थ करानने घर्मकरः सूर्यः तादृङ्नो ऽघर्मकरः सोऽनंगः

तद्वदाननं मुखंयस्याः साइचन्द्रेवदने। हिमाहिमांसुजलैरनुलेपन दाहंहरति। तत्रहिमंचंदनम् हिमांशुः कर्पूरःजलह्रीवेरम् एतै-स्त्रिभिरनुलेपनंलेपःदाहंशरीरसंतापंहरतीत्यर्थः

## भाषाटीका

चंदन कपूर और सुगंधवाला तीनोंकोघिसकर और मिलाके लेपकरें तो शरीरकादाह अर्थात्जलनमिटै

पुनश्च।शुभ्रेति

**शुभ्राभ्रविभ्रमधरेशशांककरसुन्दरे।**
**चंदनैश्चर्चितेहर्म्येस्वापस्तापमपोहति**
**॥ ३० ॥**

शुभ्राभ्रविभ्रमधरे शुक्लवर्णंच दभ्रंमेघः आकाशंवातस्याविभ्रमोभ्रांतिस्तस्य धरोधारणकर्तृवास्मिन्। अत्युच्च धवलत्वात् तद्वद् भवतीत्यर्थः। ननुमेघाकाशयोः शुभ्रत्वम् प्रसिद्धंश्यामोमेघःनीलंनभइतिनुप्रसिद्धं शुभ्रत्वंकथमित्या शङ्काह। शशांककरसुन्दरेइति।शशाङ्कस्याहिमांशोः करादीधितस्यस्ताभिः सुन्दरशोभने।चंद्रिकायांहितयोः शुभ्रत्वंसुप्रसिद्धम्। पुनश्चंदनैश्चर्चिते चंदनैर्मलयजैश्च र्चितेतज्जलैः संसिक्ते इदृशिहर्म्येकाष्ठेष्टकादिभिर्निर्मितेधनीनांधवलगृहे अत्युच्चेतत्रस्वापो निद्रांतापं देहसंतापं मपोहति दूरीकरोति

## भाषाटीका

धौलेमेघ वा आकाश के संदेह को धारणकरै और चन्द्रमा की किरणोंकरके शोभायमानतथा चंदन केजलोंसे सींचे ऐसेमनोहर हर्म्यमेंजोसोवना सोताप को दूरै है ॥ ३० ॥

पुनरप्याह।पित्तज्वरेकिंमिति

पित्तज्वरे किं रसफांटलेपैः किं वा कषाये
रमृतेना किं वा पेयं प्रियायाः सुरवमेक
मेव लोलिम्बराजेन सदानुभूतं ॥ २१ ॥

हे काममदालसे इति सम्बोधनं संबध्यते। रसफांटलेपैः पित्त ज्वरे किम् । तत्र रसः स्वरसः फाण्टः कषायविशेषः स यथा क्षुण्णमौषधजातमुष्णोदके प्रक्षिप्य ऽभिषुत्य पूत्वा यः पीयते स फांटः । यथाहुः । मास्यौष्णतोये मृदितः फांटः स्यादभिधीयतइति । अपि च । क्षुणद्रव्यपलं सम्यग् जलमुष्णं विनिःक्षिपेत् । मृतपात्रे कुडवोन्मानं ततस्तु स्रावयेत् पटात् । सोयं चूर्णद्रवः फांटोभिषग्भि रभिधीयतइति । लेपाः लेपाः निम्ब प्रवालोत्थित फेनादीनां लेपनानि कषायाः क्वाथाः एतैः किम् प्रयोजनम् अमृतेन शीतलजलेनवा किं प्रयोजनम् । ननु चिकित्सां विना कथं ज्वरताप शान्तिः स्यात तत्राह । पेयमिति । एकं सर्वोपायेभ्यः श्रेष्ठं केवलं प्रियायाः प्रीणातीति प्रिया भार्या तस्याः सुरवमेव वक्त्रमेव निश्चयेन पेयम् पातुं योग्यम् । एवेत्यवधारणे यतो लोलिम्बराजेन ग्रन्थकर्त्ता सदानुभूतम् । सर्वदाकृतपरिचयम् । अत्र संदेहो न कर्तव्य इति तात्पर्यम् । अयं विधिः कामज्वरेपि । यत उक्तम् । कांताकटाक्षदग्धानां वद वैद्य किमौषधं । दृढमालिङ्गनं पथ्यं क्वाथश्चाधरचुंबनमिति । अपि च । कस्मांतरश्चलितोऽसि वैद्यक गृहं त्वं कित्कुत्र यासि वैद्य एतिये । किं ते नास्ति गृहे सखे प्रियतमा सर्वान् गदान् हंति या । वातं तत्कुच कुंभमर्दन वशात् पिबन्तु वक्त्रामृतात् श्लेष्माणं व्यपहन्ति हन्त सुरत व्यापार केलिश्रमात् पुनश्च । अधरामृतेन पित्त वातञ्च हराति तदङ्गसंगेन । हन्ति च सुरतेन कफं त्रिदोष शमनं वपुः स्त्रीणा मिति । अपि च । प्राण

प्रेयसिसमाधिवन्तु पुरुषाः पित्तज्वरव्याकुला नानाविधजलं विल्ववतिफलं पानो विषाद प्रदम्। तत्र तैः किं कर्तव्यं तदा विदग्धकपतेमुग्धे सुखसेव्यतमा सद्यस्तापहरः सुखाधिकतरः कांताधरः केवलमिति॰

## भाषाटीका

सबजोरस॰ फांट॰ लेप॰ काढा॰ और शीतलजल इनकूं त्यागिके पित्तज्वर में अपनी प्यारी स्त्री का अधरामृत पीवै॰ ३१

॥अथापित्तज्वरे अंतर्दाहशान्त्युपायमाह। यदीति॰॥

यदि पर्युषितं धान्यसलिलं सितायासमं
प्रभातसमये पीतमन्तर्दाहं नियच्छति॥
॥ ३२ ॥

यदि पक्षान्तरे॰ धान्यसलिलं धान्यस्य धन्याकस्य जलं पर्युषितं व्युषंस्मुषं धन्याकं मृतपात्रस्य जले प्रक्षिप्य एकाधरात्रौ बहिः स्थापितं तत् व्युष्टं॰ सितया शर्करया समं सार्द्धं तत् प्रभातसमये प्रातःकाले पीतं सत् अंतर्दाहं शरीराभ्यन्तर ज्वालां नियच्छति नाशयति। यथाहुः। व्युषितं धन्याकजलं प्रातः पीतं सशर्करं पुंसाम्। अंतर्दाहं शमयत्यचिरादूरप्ररूढमपीत। अपि च। प्रातः सशर्करः पेयो हिमो धन्याकसम्भवः। अंतर्दाहं तथा तृष्णां जयेत् स्रोतो विशोधनः पलं धान्यस् षट्पलं जलम् सितापलमिता इति कर्तव्यता॥

## भाषाटीका

जो शरीर के भीतर पित्त की अधिकाई से ज्वाला सी जलती होय तो १ पल धनियां को कूट कर ६ पल जल में मिलाय मृत्तिका के पात्र में रात्रि भर भिगोय दे॰ प्रातःकाल उसमें १ पल शक्कर घोल के छान के पीले तो पित्त

की ज्वाला शान्त होय · और तृषा भी जाय · और सब छिद्रों में रुकी होय तो खुजलाना चाहिये ॥ ३२ ॥

अथवातपैत्तिकज्वरे नवाङ्गपाचनमाह । पञ्चमूलीति

पञ्चमूल्यमृतामुस्ताविश्वभूनिंबसाधितः कषायःशमयत्याशुवायुभवज्वरं ॥ ३३ ॥

पञ्चानांमूलानां शालपर्ण्यादीनांसमाहारः पञ्चमूली द्विगोरितिङीप् तथाहि । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् । वातपित्तहरंवृष्यं कनिष्ठंपञ्चमूलकम् ॥ अमृतागुडूची । मुस्तामुस्तकम् । विश्वंशुण्ठी । भूनिम्बःचिरातिक्तः । एतैर्नवभिर्निर्मितः कषायः क्वाथः वायुनायुभवंवायुर्वातःसायुपित्तं ताभ्यांजनितम् ज्वरम् । आशुशीघ्रं शमयतिनाशयति ॥ यथाहचक्रपाणिदत्तः । संसृष्टदोषेषु हितंसंसृष्टमथपाचनम् । विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः । कृतःकषायोहन्त्याशुवातपित्तोद्भवंज्वरमिति ॥

## भाषाटीका

पञ्चमूली जो शालपर्णी जिसे गौड़देशमें शालपाणी कहते हैं १ पृश्निपर्णी जिसे मध्यदेशमें चिकरोत औरपिठवनी कहते हैं २ छोटीबड़ीदोनोंकटेली ४ गोखुरू ५ यही छोटीपंचमूलीकहातीहै । गिलोय ६ मोथा ७ सोंठ ८ औरचिरायता ९ इन नौ चीज़ों का काढ़ा बनाय के पीवे तो वात पित्त का ज्वर शीघ्र ही नष्ट होय ॥ ३३ ॥

अथकासश्वाससहितेकफज्वरेऽवलेहमाह । शृङ्गीति

शृंगीकणाकट्फलपुष्कराणां क्षौद्रान्वितानांविहितावलेहः श्वासेनकासेन

युतांविलासज्वरं जयेदत्र न कापि शंका ३४

क्षौद्रान्वितानां शृङ्ग्यादि चतुर्णां विहितोऽवलेहः श्वासेन कासेनच सहितं वलासज्वरं जयेति । अत्र कापि शंका नास्ति। तत्र क्षौद्रं कपिलवर्णं मधु । यथोक्तम् । मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतम्मधु। मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत् । गुणैर्माक्षिकवत् क्षौद्रंविशेषात्मेहनाशनमिति भावप्रकाशे। क्षुद्राभिर्मक्षिकाभिः कृतम् । क्षुद्रा भ्रमरेत्यत्र। शृङ्गीअजशृङ्गी· कणामागधी· कट्फलःश्रीपर्णिवं·पुष्करं कुष्ठेवधंम् । एषांकृतोऽवलेहः। अवलेहोनाम क्वाथादेर्यत् पुनः पाकात् घनत्वं सारसाक्रिया। सोऽवलेहश्च प्राश इत्युच्यते बुधैरिति वैद्यक परिभाषा-

## भाषाटीका

स्वास औरकास के साथ जो कफज्वर होयतो·मेंढासींगी·पीपल·कायफल और कूट इनचारों को कूटकर चूर्णकरे उस चूर्ण को कपिलवर्णमाक्षिक वा साधारण मधुके साथ मिलाय के चाटेंतो कासस्वास के साथ जो कफका ज्वर सो नष्ट होइ इसमें संदेह नहीं ॥ ३४ ॥

भार्गीति

भार्गीगुडूचीघनदारुसिंही शुंठीकणा-
पुष्करजः कषायः ज्वरं निहन्ति श्वसनं क्षिणोति क्षुधां करोति प्ररुचिंतनो
ति ॥ ३५ ॥

भार्ग्यादिप्रष्टानामोषधीनान् कषायः ज्वरं नितरां-हंति श्वसनं श्वासंक्षिणोति नाशयति· क्षुधाकरोति प्ररुचिंप्रकृष्ठ मन्नाभिलाषं· तनोति विस्तार यति । तत्र भार्गी

ब्राह्मणयष्टिका·गुडूचीतन्त्रिका·घनोमेघनामा दारुर्देवदारु सिंही कंटकारी शुंठी महौषधम्·कणाकृष्णा·पुष्करजःपौष्करमूलम्।

## भाषाटीका

भारंगी १ गिलोय २ मोथा ३ देवदारु ४ भटकटैया ५ सोंठ ६ पीपल ७ और पोकरमूल ८ इन आठों का काढा बाटन वा पीनेसे ज्वरजाय, स्वासनष्ट होय, क्षुधाबढे अन्नमेंरुचि बढे ३५॥ ममेति

ममद्वयं विस्मयमातनोति तिक्ताकषायो मुखतिक्तनाशः। निपीडितोरोजसरोजकोषा योषाप्रमोदं प्रचुरं प्रयाति॥ ३६॥

ममलोलिम्बराजस्य·वस्तुद्वयं विस्मयमाश्चर्यमातनोति उत्पादयति। किंतद्द्वयम्· तिक्ताकषायो मुखतिक्तनाशः तिक्ता कटुका तस्याः कषायः क्वाथः समुखतिक्तनाशः मुखस्य नाशनो· · भवतीत्येकम्। प्रलापोवक्त्रकटुतेत्यादि नि दानोक्तत्वात्· मुखतिक्तता पित्तज्वरकृता बोध्या पुनश्च नपीडितोरोजसरोजकोषा नितरां पीडितः करेण उरोजसरोजयो कुचकमलयोः कोषः कुड्मलं यस्याः सायोषास्त्री·प्रचुरं प्रभूतं बहुतरं·प्रमोदं हर्षं·प्रयाति प्राप्नोतीत्येतद्द्वयमित्यर्थः॥

## भाषाटीका

कुटकी का काढा पीनेसे पित्त ज्वरतेहोय जो मुखका कडवापन सो नष्ट होय·ये कुटकी का काढा ऐसा है॥ ३६॥

क्वाथइति

क्वाथः कट्फलकतृणाब्दधनिकाशृंगी युगन्धाभया भार्गीपर्पटविश्वदेवतरुजो वाल्हीकमध्वान्वितः का

सश्वासमुखामयज्वर बलश्लेष्मप्रको
पंहरेत् तद्वत्कोमलकांठकंठ जानेता
पीडांचजेहीयत॥३७॥

वाल्हीक मध्वान्वितः कट्फल कतृणाब्द धानिका शृं
ग्युग्रगन्धाभया भार्गीपर्पटविश्वदेवतरुजः क्वाथः कासश्वास
मुखामयज्वर बलश्लेष्म प्रकोपंहरेत् । तत्रवाल्हीकंहिङ्गु तच्च
शाणमितम् · मधुमाक्षिकम्तच्चतोलकद्वयात्मकं कर्षमितम्
कट्फलः कैटर्यः कत्तृणंपौरम् · अब्दोमुस्ता · धानिकाधन्याक
म् · शृङ्गीकर्कटशृङ्गी · उग्रगन्धावचाः अभयाहरीतकी · भार्गी
ब्राह्मणयष्टिका · पर्पटः पित्तारिः विश्वंशुण्ठी, देवतरुर्देवदारु।
एकादशोभिरेतैर्द्रव्यैजनितेक्वाथे शृतेचसतितत्र पश्चाद्धिङ्गु म
धुनीप्रक्षेप्तव्ये । सपीतःसनकासादीन् हरेत् । तत्रकासः प्रसिद्धः
श्वासःश्वासरोगः मुखामयोगलशुण्ड्यादि रूपोमुखरोगः
ज्वरबलंज्वरवेगः श्लेष्मप्रकोपंकफवृद्धिम् । हे कोमलकण्ठि
मृदुगलध्वनिविशिष्टे तद्वत्तथैव · कंठजनितां गलोद्भवां पीडां
व्यथाञ्च जेहीयते अतिशयेननाशयति कोमलंमृदुलंजलेइ
ति · कंठोगलेसन्निधाने ध्वनौ मदनपादपेइतिचमेदिनीकरः

## भाषाटीका

कायफल · कत्तृण जिसे गौड़देशवासी रामकर्पूर ·
कहतेहैं, मोथा · धानियां · काकड़ासींगी · वच · पांचरेखा
वालीहड़ · भारंगी · पित्तपापड़ा · सोंठ · औरदेवदारु · इनग्यारह
औषधोंकाकाढा करके छानके पीछे हींग४ मासे कोमुन
केपीस ले और दोतोले सहत इनदोनों कोउसकाढे में
डालके पीवें तो · खांसी · स्वासरोग · मुखकेरोग · ज्वरकावेग
तथाकफकीवढ · औरकंठपीडा · येसबरोग नष्ट होंय ३७

अरुचिमिति

अरुचिघ्नातिलुङ्गकेसरं सघृतं सैंधवचू र्णमिश्रितं रुचिमम्बुरुहस्य तान्विते नयनं स्वञ्जनगञ्जनं यथा ३८

हे तान्वि हे कृष्णाङ्गि सघृतं साज्यं सैंधवचूर्णमिश्रितम् शातशिर जो युक्तं लुङ्गकेसरं बीजपूरकेसरम्। बीजपूरकेस रस्योर्द्धं ते सहावलेह्ः अरुचिमन्नानभिलाषस्वरूपम् रोगं घाति खंडयति। अत्र दृष्टान्तः। हे तान्वि स्वञ्जन गञ्जनं स्वञ्जनं स्वञ्जरीटाख्यपक्षिणं गञ्जयति समदत्वात् तिरस्करोति एवंभूतं ते नयनं लोचनं यथा अम्बुरुहस्य अम्भोजस्य रुचिं शोभां खण्डयति तथेत्यर्थः॥

भाषाटीका

बिजौरा नींबू के भीतर से केसरा को निकास के सेंधे नोंन का चूर्ण उस्में मिलाके इसे घी के साथ खाय तो अरुचि रोग जिससे अन्न में इच्छा होन होय, नष्ट होय अर्थात् अरुचि रोग अवश्य मिटे। ३८।

अथ सकलसन्निपातानां बुद्धिभ्रमस्वेदादीनाञ्चाभावाय क्वा थमाह मन्थीत्यादि श्लोकाभ्याम्

मन्थीद्विजा भरपुरकं सुराह्वभार्गीभिद्ग विकटुनलकटफल पाष्करा णारी स्त्राभया दहातिका हृद्यदीप्यभूत केशी किरातकवचा ग्रन्थिका द्वकीर्णा॥३९॥ क्वाथोऽयं त्सान्निपातान्समस्तानबु द्धिभ्रंशस्वेदशैत्यप्रलापान् श्लो भानावद्वाधिश्लेष्म वातान्वातव्याधे

## सूतिकानांचतद्वत्४०

ग्रन्थ्यादीनांत्रियोविंशतिद्रव्याणांक्काथः समस्तान् सक
लान् सान्निपातान् त्रिदोषजनितान्· बुद्धिभ्रंशंचित्तवैकल्य
म्· स्वेदंप्रस्वेदं· शैत्यंशरीरे शीतभावम्· प्रलापमनर्थभाष
णम्· शूलवातेन जठरपीड़ां· आध्मानंवातनिरोधजं सवेदनो
दरपूर्णत्वम्· शूलाध्मानयोर्द्वन्द्वैक्यम्· विद्राधिंहृद्व्रणम्· श्ले
ष्मवातं कफयुक्तवायुम्· तद्वत्तथैव सूतिकानां नवप्रसू-
तानांवातव्याधिंवायुरोगञ्च· हन्यात्नाशयेत्। हन्यादि
त्यस्य सर्वत्र सान्निपातादौ सम्बधः। तत्रग्रन्थिः पिप्पली-
मूलं· इन्द्रजः इन्द्रयवः अमरः कुलिशद्रुमः सिहुण्डः अम
रोदेवदार्विति कश्चित्· पुरोगुग्गुलः क्रमिशत्रुः विडङ्गः
भार्गीफञ्जिका· भृङ्गं· गुडत्वक् त्रिकटु विश्वोपकुल्या
मरिचम्· अनलश्चित्रकः कट्फलः श्रीपर्णिका· पौष्करं-
पुष्करमूलम्· रास्नानाकुली· अभयापंचरेखाहरीतकी· दृ
हतिकाद्वयं कण्टकारी युग्मम् दीप्योयवानी· भूतकेशी
जटामांसी· दीप्योयवानी· भूतकेशीजटामांसी किरातक·
श्चिरातिक्तः वचाषड्ग्रंथा· चविकाचव्यम्· ढ्यकीपाठा॥

## भाषाटीका

पीपलामूल· इंद्रजव· सोहुंड वा देवदारु· गूगल·
वायविडंग· भारंगी· दालचीनी· सोंठ· मिर्च· पीपल· चीता
कायफल· पौहकरमूल· रायसन· जैतकेबीज· और-
हर्ड· दोनोंकटेली· अजवायन· जटामांसी· चिरायता
घुडबच· चव· और पाठा इन २३ द्रव्यों का काढ़ापीनेसे
सब सान्निपात· बुद्धिभ्रंस· पसीना· शीतकालगना· अनर्थ
काबोलना· सूल· अधोवायु रुकनेसे पीड़ाकेसाथपेट

फूलना · हृदयका विस्फोट · कफयुक्तवायु · औरप्रसूतवायु आदि समस्त रोग नष्ट होंय · ॥ ३९ । ४० ॥

क्वाथांतरमाह।अर्कानंतेत्यादिना॥

अर्कानंताकिराताऽमरतरुरसनासिन्दुवारोग्रगंधा तर्कारीशिग्रुपंचोषण-घुणदयितामार्कवाणांकषायः स घ्रस्तीव्रांस्त्रिदोषान्ऽप्रहरतिधनुर्मारुतंदंतबंधं शैत्यंगात्रेचगाढंश्वसनकसनकंसूतिकावातरोगान्॥

अर्कादीनांषोडशद्रव्याणां कषायः क्वाथः पीतः सन् · तीव्रान्दुःसहान् · त्रिदोषान्सान्निपातान् · धनुर्मारुतंधनुर्वातम् · दंतबंधं दन्तानां रदनानां बंधोबंधनम् गात्रेशरीरे · गाढंदुःसहं · शैत्यंकम्पम् · श्वसनं श्वासम् · कसनकंकासम् · सूतिका वातरोगान् प्रसूतस्त्रीवातव्याधीन् सद्यस्तत्कालं प्रहरति। तत्रअर्कः · अर्कमूलम् अनंताताम्रमूलायासः। किराताश्चिरातिक्तः अमरतरुर्देवदारु · रसनारास्ना · सिंदुवारः सिंधुकः उग्रगंधावचा · तर्कारीअरणीअग्निमंथः शिग्रुशोभांजनः पंचोषणम्पंचकोलम् · तद्यथा। पंचकोलंकणामूलकृष्णचव्याग्निनागरैरिति। घुणदयिता अतिविषा · मार्कवोभृंगराजः

## भाषाटीका

अर्कमूल · जवासा · चिरायता · देवदारु · राइसन · वा जैतकेबीज संभालू · घुडबच · अरणी · सहजना · पीपलामूल · पीपल · चव · चीता · सोंठ · अतीस · भांगरा · इनसोलह औषधों का काढ़ा पीनेसे ( दुःसान्निपात केज्वर , धनुर्वाय , दांतोंकेबंध , शीतसे असह्य ऐसे शरीर का कांपना , श्वास

औरकास तथा प्रसूतास्त्री केवातव्याधि; येरोगनष्टहोंय ४१ अपरंसकलसान्निपातापहंक्वाथमाह। तिक्तेति॥ ४२

तिक्तातिक्तकपर्पटामृतशटी रास्नाकणापौष्कर त्रायन्तीबृहतीसुरौषधशिवा दुस्पर्शभार्गीकृत: क्वाथोनाशयतीत्रिदोषजनितं स्वापंदिवाजागरंनक्तंतृण्मुखशोषदाहकशनं श्वासानशेषानपि ४२

तिक्तादिपञ्चदशौषधैर्विहित: कषाय:सर्वान् सान्निपातान् स्वापादीश्चनाशयति। तत्रतिक्ता कटुका· तिक्तकोभूनिम्ब:पर्पट:पित्तारि: अमृतागुडूची· शटीगंधमूली·रास्नासुगन्धा(?)· कणापिपली· पौष्कर पुष्करमूलम्· त्रायन्तीत्रायमाणा· बृहतीकण्टकारी· सुरो देवदारु· औषधं शुण्ठी·शिवाहरीतकी· दुस्पर्शो धन्वयास:– भार्गीब्राह्मणयष्टिका· एतैपंचदशभिर्निर्मित: कषाय:त्रिदोषजनितं सान्निपातसमूहम् दिवास्वापं दिवसे शयनम्· नक्तंजागरं रात्रौ जागरणम्। तृण्मुखशोषदाहकसनम् तृट्पिपासा· मुखशोषोवक्त्रस्यशोषणम् दाहोगात्रसंताप: कसनंकास: एषांद्वंद्वैक्यम्। अशेषान् नि:शेषान् महाश्वासादीन् नाशयति। सान्निपातास्तथा भावप्रकाशे(?)। शीघ्रगस्तान्त्रिकश्चित्तविभ्रम:कण्ठकुब्जक: कर्णिकोजिह्मगश्चैव रुग्दाहश्चान्तकस्तथा। भग्ननेत्रोविलापश्च प्रलाप: शीताङ्गक:। अभिन्यासश्चेतिविद्यात् सन्निपातांस्त्रयोदशेति॥ एतेषांलक्षणान्याह चक्रपाणिदत्त:। सदास्यं श्लेष्मणापूर्णंशूल: कासोतिवेदना। शोथश्च लक्षणान्येवं शीघ्रगेसान्निपातिके॥१॥ अतितन्द्राज्ज्वर:श्व

मः कासस्तापोऽतिसारकः। स्थूलकण्ठः सिताश्यामा जिह्वाकं
ठे च कूजितः॥ क्रीतिरत्याचेति विद्यात् नाभ्रिके सान्निपातिके
॥ २॥ मदोमोहोभ्रमस्तापोहास्यशीतप्रलापवान् नित्यंवैकल्य
तापीड़ा विकटास्य निरीक्षणम्॥ लक्षणैः सान्निपातोऽयं ज्ञातव्य
श्चित्तविभ्रमः ॥ ३॥ कण्ठग्रहोज्वरोमूर्च्छा दाहः कम्पोविला
पनम्। मोहस्तापः शिरोऽर्त्तिश्च वातार्त्तः प्रलयंगतः॥ कण्ठ-
कुब्जं सान्निपातं कष्टसाध्यं विनिर्दिशेत ॥ ४॥ ज्वरः कर्णान्त
शोथश्च श्वासः कम्पः प्रलापनः। स्वेदः कंठग्रहस्ताप स्तृष्णमोहो
भयमेवच ॥ कर्णिके सान्निपाते च लक्षणानि भवंतिह॥५॥
सङ्कटकटिका जिह्वा कासः श्वासोऽतिविह्वलः मूकोवधिरता
तापोबलहानिश्च लक्षणम्॥ जिह्वगः सान्नि पातोऽयं कष्टा
त् कष्टतरः परः॥६॥ मोहस्तापः प्रलापश्च व्यथाकंठेसमःश्रमः
वेदनाचतृषाजाड्यं श्वासश्चलक्षणैरिमैः॥ कष्टात् कष्टतरोज्ञे
यः कग्नाहः सान्निपातिकः॥७॥ दाहोमोहः शिरः कम्पोहि-
क्काश्वासाङ्गमर्दनम्। सन्तापश्चान्तकोज्ञेयः सान्निपातोऽति
मारकः॥८॥ व्यसनंलोचनेभुग्ने स्फूर्तिः स्थूलाज्वरोऽधिकः
। मोहप्रलपनं कम्पोभ्रमोनिद्राच लक्षणे॥ ज्ञातव्योभुग्ननेत्रो
ऽयं सान्निपात क्षयंकरः॥९॥ रक्तानेष्ठीवनं मूर्च्छा ज्वरोमोह
स्तृषाभ्रमः। वान्तिर्हिक्काऽतिसारश्च संज्ञानाशोदृ दिव्यथा-
मंडलश्यावरक्तश्च देहेषु लक्षणैरिमैः। ज्ञातव्यः सान्निपातोयं
रक्तष्ठीवीनिपातकः॥१०॥ प्रलापतापकर्णार्ति प्रज्ञानाशोऽतिता
पवान्। ज्ञेयः प्रलापकश्चिन्हैः सान्निपातोऽतिसारकः॥११॥शा
रीरंहिमवच्छीत मतिसारश्च कंपनम्। कर्णनादोहस्तापो हिक्का
श्वासः क्लमोऽरसम्। सर्वाङ्गशीतलोझान्तिशीताङ्गः सान्निपातक
॥१२॥ त्रिदोषज्वरसुरवं रूक्षकं निद्रावैकल्यकष्टवाक्। निश्चेत

नमतिश्वासोमन्दाग्निर्बलहीनता॥ मृत्युतुल्यमभिन्यास-
सन्निपातज्वलक्षयोदिति॥ १३ ॥ श्वासभेदांस्तेषांलक्षणा
निचाहभावमिश्रः। महोर्द्ध्वच्छिन्नतमक क्षुद्रभेदैस्तुपञ्चधा
।मियतेसमहाव्याधिः श्वासएकोविशेषतः। उद्धूयमानवा
तोयः शब्दवद्दुःखितोनरः उच्चैःश्वसितिसन्नद्धोमत्तर्षभइ
वानिशम् ॥ प्रणष्टज्ञानविज्ञानस्तथाविभ्रान्तलोचनः। वि
कृताक्ष्याननोबद्धमूत्रवर्च्चाविशीर्णवाक्। दीनःप्रश्वसितंचा
स्य दूरात्विज्ञायतेभृशम् महाश्वासोपसृष्टस्तुक्षिप्रमेवावि
पद्यते ॥ अस्यार्थः॥ उद्धूयमानवातःउर्द्ध्वंनीयमानोवातोयस्यस
शब्दवत्शब्दंयथास्यात्। कीदृकसशब्दस्तद्दोधयितुमाह।
मत्तर्षभइवउच्चैश्वसितीत्यन्वयः। सन्नद्धः आनाहयुक्तइति
यावत्। ज्ञानंशास्त्रम् विज्ञानंतदर्थविनिश्चयः विशीर्णवाक्
स्खलितवचनःदीनःग्लानः। मारकश्चायंमहाश्वासः॥ १॥
ऊर्द्ध्वश्वासमाह। ऊर्द्ध्वंश्वसितियोत्यर्थंनचप्रत्याहरत्यधः
श्लेष्मावृतमुखस्त्रोतः क्रुद्धगंधवहार्दितः ॥ ऊर्द्ध्वदृष्टिर्विप
श्यंस्तु विभ्रान्ताक्षइतस्ततः। प्रमुह्यन् वेदनार्तश्च शुष्कास्यो
रतिपीडितः ॥ ऊर्द्ध्वश्वासेप्रकुपिते ह्यधःश्वासोनिरुध्यते।
मुह्यतस्ताम्यतश्चोर्द्ध्वं श्वासस्तस्यैवहन्त्यसून् ॥ अस्यार्थः
॥ सर्वेषुश्वासेषुऊर्द्ध्वंश्वसते अत्रात्यर्थमितिविशेषः।नच
प्रत्याहरत्यधः। नश्वासमधः करोति। श्लेष्मावृतेत्यादि।
श्लेष्मणाआवृतंयत् मुखंस्त्रोतांसिचतैः क्रुद्धोयोगन्धवहस्ते
नार्दितः। विपश्यन्इतस्ततोविकृतंयथास्यादेवंपश्यन्। अधः
श्वासोनिरुध्यतेश्वासोनाधःप्रवर्त्ततेइति ॥ ऊर्द्ध्वश्वासस्या
रिष्टस्य लक्षणमाह। मुह्यतोमोहं प्राप्नुवतश्च। ऊर्द्ध्वंश्वासो
असून् प्राणान्हन्ति। तस्यैवेति नतुमोहग्लानिरहितस्य २

छिन्नश्वासमाह। यस्तुश्वसितीविच्छिन्नं सर्वप्राणेनपीडितः। नचाश्विसितिदुःखार्त्तो मर्म्मच्छेदरुजार्द्दितः॥ आनाहस्वेदमूर्च्छार्तो दह्यमाने नवास्तिना। विप्लुताक्षः परिक्षीणः श्वसन् रक्तेकलोचनः॥ विचेताः परिशुष्कास्यो विवर्णप्रलपन् नरः। छिन्नश्वासेनविच्छिन्नः सशीघ्रंविजह्यात्यसून्। अस्यार्थः। विच्छिन्नंसविच्छेदम्। सर्वप्राणेनयाहलेन। मर्म्मच्छेदरुजार्द्दितः हृदयाशिरच्छेदवेदनयेवपीडितः। दह्यमानेनवास्तिना पलक्षितः। विप्लुताक्षः अश्रुपूर्णनेत्रः। विचेताः उद्विग्नचित्तः। छिन्नश्वासेनविच्छिन्नः सः। यस्तुश्वसितिविच्छिन्न मित्यादिलक्षणयुक्तोपः सनरश्छिन्नश्वासेन विछिन्नः पीडितोबोद्धव्यइति। मारकश्चापंविश्छिश्वासः ॥३॥ तमकश्वासमाह। प्रतिलोमंयदावायुःस्त्रोतांसिप्रतिपद्यते। ग्रीवांशिरश्च संगृह्य श्लेष्माणंसमुदीर्य्यच। करोतिपीनसंतेनकण्ठेघुर्घुरकंतथा। अतीवतीव्रवेगञ्च श्वासंप्राणप्रपीडकम्। प्रताम्यतिसवेगेन त्रस्यतेसन्निरुध्यते। प्रमोहंकासमानश्चसगच्छतिमुहुर्मुहुः। श्लेष्मणामुच्यमानेन भृशंभवतिदुःखितः। तस्यैवचाविमोक्षान्तेमुहूर्त्तंलभतेसुखम्॥ तथास्योध्वंसतेकण्ठः कृच्छ्राच्छक्नोतिभाषितम्। नचापिनिद्रांलभतेशयानः श्वासपीडितः। पार्श्वेतस्यावगृह्णातिशयानस्यसमीरणः। आसीनोलभतेसौख्य मुष्णञ्चैवाभिनन्दति॥ उच्छ्रिताक्षो ललाटेनस्विद्यताभृशमार्तिमान्। विशुष्कास्यामुहुःश्वासो मुहुश्चैवावधम्यते॥ मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्चाविवर्द्धते। स याप्यस्तमकःश्वासः साध्योवास्यान्नवोत्थितः॥ अस्यार्थः॥ संगृह्य व्यथयित्वा। समुदीर्य्यविवर्द्धयित्वा। पीनसंनासास्रावम्। तेनश्लेष्मणा। घुर्घुरकं

घुर्घुरशब्दम् । प्राणप्रपीडकप्राणाधिष्ठानं हृदयप्रपीडकम् । प्रता
म्यतितमसिप्रवशतीव । वेगेनश्वासवेगेन । सनिरुध्यतेनिश्चेष्टो
भवतीति चक्रः सनिरुध्यतेश्वासइतिजैय्यटः । श्लेष्मणाअमु
च्यमानेन । सुखंसुखमिव । उद्धंसनेव्यथितोभवति । शयानः
शय्यानिहिताङ्गः । अवपृक्तानिपीडयति । उष्णञ्चैवाभिनंद
तीत्यनेनतमकोवातकफाख्यइतिबोधव्यम् । उद्भिन्नाक्षःशू
नाक्षः ललाटेनस्विद्यताउपलक्षितः । अवधम्यगजारूढस्यो
वसर्वगात्रंचाल्यतेइति ॥४ ॥ क्षुद्रश्वासमाह । रूक्षायासो
द्भवः कोष्ठेक्षुद्रोवातउदीरयन् । क्षुद्रश्वासेनसोऽत्यर्थंदुःखे
नाङ्गप्रवर्तकः ॥ हिनस्तिनचगात्राणि नचदुःखोयथेतरः । नच
भोजनपानानांनिरुणध्युचितांगतिम् ॥ नेन्द्रियाणांव्यथां
ञ्चापिकाञ्चिदुत्पादयेद्रुजम् । ससाध्यउक्तोबलिनः सर्वेचात्य
न्तलक्षणाः । अस्यार्थः । क्षुद्रः अल्पनिदानलिङ्गः । उदीरयन्
ऊर्द्धंगच्छन् । दुःखः दुःखप्रदः । सर्वेमहाश्वासादयोपीति ॥

## भाषाटीका

कुटकी · चिरायता · पित्तपापड़ा · गिलोय · कचूर · रा
यसन · कुड़ा जेतके बीज · पीपल · पोहकरमूल · वायवी जि
सेगोडिये वलावा वडुला कहतेहैं · भटकटैया · देवदारु
· सोंठ · हर्ड · जवासा · और भारंगी इन पंद्रह औषधियोंका
काढ़ा पीनेसे · सोर सन्निपात · दिनकीनींद · रात्रिकाजा
गना · औरप्यास · मुखका सूखना · तथा देहकादाह · खां
सी और सबप्रकार के स्वास के रोग नष्ट होंय · यह का
ढ़ासेसाहै · ॥ ४२ ॥

कालेनसहसन्निपातस्याभेदवदन् तज्जयकर्तुर्वैद्य-
स्यप्रशंसामाहद्वाभ्याम् । सन्निपातस्येति ४३ ॥ त्रिदोषेति

सन्निपातस्य कालस्य काश्चित भेदोनाविद्य
ते। चिकित्सकोजयेद्यस्तंतस्मात् कोस्तिप्र-
तापवान् ॥४३॥ त्रिदोषाजगरग्रस्तंमोचयेद्य
स्तुवैद्यराट् आत्मापितस्मैदातव्यः किंपु
नःकनकादयः॥ ४४ ॥

सन्निपातस्य त्रिदोषजनितव्याधेः कालस्य मृत्योश्च कश्चित कश्चनः भेदोविशेषोनाविद्यते नास्ति। योवैद्यः त सान्निपातजयेत् पराङ्मुखीकुर्यात्· तस्माद्भिषजअन्योऽपरः प्रतापवान् नाममात्रोच्चारेणैनवैरीबिदारणकर्त्ता· कोस्तिनकोपीत्यर्थः।उक्तञ्च। मृत्युना सह्योद्धव्यं सान्निपात चिकित्सुना। यस्तुतत्रभवेज्जेता सजेताभय संकुल इति ॥ ४३॥ त्रिदोषाजगरग्रस्तं· त्रिदोषः सान्निपातः स एव अजगरः सर्पविशेषोवाहसः तेनग्रस्तं गिलितंनरं · योवैद्य राट्मोचयेत् तस्मैवैद्यराजे आत्मादेहोपिदातव्योदेयः कनकादयः पुनः किम् · कनकादीनांपुनः कावार्तेति ॥४४॥

सान्निपातानन्तरं कर्णमूलेशोथोभवति तदुपायमाह। यःशोफइति

यःशोफःश्रुतिमूलजःसुकठिनःशांतेत्रि-
दोषःज्वरे रक्तंतत्रजलौकयापरिहरेत्स
र्पिः पिबेच्चातुरः रास्नानागरकुष्ठमूल
इतभुगदारुव्योरिनभन्यैःसमैःलेपःस्यादर
विन्दनयनशोथव्यथाध्वंसनः ॥ ४५ ॥

त्रिदोषज्वरे सान्निपातज्वरे शान्तोनष्टेसति · श्रुतिमूलजः कर्णपार्श्वोद्भवोयःशोफः शोथः कीदृशः शोफः सुकठिनः अतिकठोरः। तत्रजलौकयारक्तपया · रक्तंरुधिरं परिहरेत् निष्कासयेत्। जलौकयेतिजात्यावेकवचनम्। आतुरोरोगीसर्पिः घृतं चापिबेत। हेअरविंदवंद्यनयने अरविंदैर्महोत्पलैर्वन्द्ये वंदनीये-

नयनेलोचनेयस्यास्तत्सम्बोधने हे अरविंदवद्य नयने इति। शो
थस्यव्यथाध्वंसनः शोफपीड़ाविनाशनः रास्नादिषाड्विलेपः स्यात्।
तत्ररास्नानाकुली नागरंशुंठी लुंगमूलंबीजपूरद्रुमः कुत्सुक
चित्रकःदार्वीदारुहरिद्रा अग्निमन्थो गणिकारिका एतैः षाड्भिः
समैःर्नैर्लेपो विहितः॥ अत्राहवाग्भटः। सन्निपातज्वरस्यान्ते कर्ण
मूलेसुदारुणः। शोफसंजायतेतेन कश्चिदेवप्रमुच्यतइति॥ सुश्रु
तेतु विशेषउक्तः। ज्वरादितोवाज्वरमध्यतोवाज्वरान्ततोवाश्रुति
मूलशोफः। क्रमादसाध्यः खलुकष्टसाध्यः सुखेनसाध्यः कथि
तोमुनिन्द्रैरिति॥

# भाषाटीका

सान्निपात ज्वरकी निवृत्ति केपीछे जो कर्णके मूलमें अति कठोर शोथहोय तोतिसशोथमें जोंके लगवायकेप्र थमतोरुधिरको निकसवायदे। फिर रोगीगोंका घृतपावे और रायसनवच्या जेतकेबीज सोंठ बिजोरे नीबूकीजड़ चीता दारुहल्दी औरगंगेरन जिसे अरणीभीकहतेहैं इन छओंकोसमानलेके पीसके लेप करे तो सूजनकीपीड़ा न रहाय रोगी सुखपावे॥ ४५॥

अथाशिरःपार्श्वस्थितशूलकासश्वासजीर्णज्वराणां निवृत्तेरुपाय
माह। शूलादिति

शूलात्पार्श्वशिरःस्थितात्कसनतःश्वासा-
च्चजीर्णज्वरान् मुक्तःस्यात्पुरुषःपयःप-
रिपिबन्नच्छाग्निणापाचितं एकासो
गुडपिप्पलीविजयतेजीर्णज्वराऽजीर्णरुक्
क्षुन्माद्याऽरुचिपांडुजंतुकसनश्वासान्-
किमन्यौषधैः४६

पुरुषोमनुष्यः पञ्चांशेनशालपर्ण्यादिलघुपञ्चमूलेन पा
चितंपक्कं पयोजलम् पीतोपिबन् सम्यक् पानंकुर्वन् पार्श्वोशिरःस्थि
तात् मस्तकान्तिकस्थात् शूलात् पीडायाः कसनतः कासात्
श्वासात् श्वासरोगात् चपुनः जीर्णज्वरात् त्रिसप्ताहातीतान्महा
गदान्च मुक्तः स्यात् रहितोभवति अपिच हे भरविन्दवंदनयने
असौगुडापिप्पलीगुडेन शिशुप्रियेण युक्तापिप्पलीकृष्णा
स्वकार्यकारिणीजीर्णज्वराजीर्णरुक्सुमांद्यारुचिपाण्डुजंतु
कसनश्वासान्यदिविजयतेजयति तद्योन्यौषधैः गुडापिप्प
ल्यतिरिक्ते भेषजेः किमनुकिमपिफलमित्यर्थः तत्रापिप्पल्य
पेक्षयागुडोद्विगुणोयोज्यइतिमर्यादा। जीर्णज्वरः त्रिसप्ताहं व्य
तीतेतुजीर्णसंज्ञां लभेत इत्युक्तः। अजीर्णरुक् अपाकरोगः क्षु
न्मान्द्यं द्योयोबुभुक्षायाः मन्दत्वम् अरुचिः अन्नादनाभिलाषस
त्यप्यस्यवहारासामर्थ्यरूपोरोगः पाण्डुः त्वङ्नेत्रादीनां पीतत्व
जनकोरोगविशेषः जन्तुः उदरे कृमिजनकोरोगः कसनंकासः
श्वासः श्वासरोगः॥

# भाषाटीका

सालपाणी १ चकरोंत २ छोटीबडीदोनोंकटेली ३-४
और गोखरू इन पांच औषधन को पीवेतो सिर के पास
का शूल वा खांसी श्वासरोग और पुराजातप इनरोगों
से रोगी मुक्तहोय। और जो रोगी इनपुरानेगुड के सा
थ अकेली पीपल के चूरन कीगोली का सेवन करै
तोभीपुराना ज्वर अनपच भूखकी मन्दता वा अन्नमें
अरुचि पाण्डुरोग उदरमेंकृमीरोग खांसी औरश्वासका
रोग येसबनष्टहोय औररोगीसुखीहोय॥ ४६॥

अथकफकृतजीर्णज्वरे पाचनमाह। जीर्णज्वरामीति॥

जीर्णज्वरं कफकृतं कणया समेतः छिन्नोद्भवोद्भवकषायकएकहंति रामोदशास्यमिवरामइवप्रलंबं रामोयथासमरमूर्द्धनि कार्त्तवीर्यं ॥४७॥

कणया पिप्पलीचूर्णेन समेतः संयुक्तः एषपुरोवर्त्ती छिन्नोद्भवोद्भवकषायकः छिन्नोद्भवाया गुडूच्याउद्भवोजन्मयस्य सतादृशः कषायकः कषायएव कषायकः क्वाथः कफकृतं श्लेष्मकृतं जीर्णज्वरं ज्वरागमादिनं परित्यज्य त्रिसप्ताहव्यतीतं ज्वरं हंतीहिनस्ति। अत्रदृष्टान्तः। कः कमिव। रामोदाशरथिः दशास्यमिव रावणंयथा। पुनः रामोहलायुधः प्रालंबासियप्रलंबासुरं यथा। पुनश्च समरमूर्द्धनिसंग्रामसमुखे रामोजामदग्न्यः कार्त्तवीर्यंहैहयमिवेति

## भाषाटीका

गिलोयके क्वाथको पीपलके चूर्णके साथ मिलायके पीवेतो कफसहित जोजीर्णज्वर सो नष्टहोय॥ ४७ ॥

पुनराहपञ्चमूलीति

पंचमूलीकषायस्य सकृष्णस्य निषेवणात् जीर्णज्वरः कफकृतो विदधातिपलायनं ॥ ॥ ४८ ॥

सकृष्णस्य पिप्पलीचूर्णयुतस्य पञ्चमूलीकषायस्य लघुपंचमूल्याः क्वाथस्य निषेवणात् तत्पानाभ्यासात् कफकृतः श्लेष्मप्रकोपाज्जातः जीर्णज्वरः पलायनमपयानं विदधाति स्वयमेव पलायतीत्यर्थः ॥ उक्तंच ॥ पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः। जीर्णज्वरकफध्वंसी पंचमूलीकृतोथवा ॥ कासाजीर्णरुचिश्वासहृत् पाण्डुकृमिरोगनुदिति ॥ ४८ ॥

जीर्णविषमसान्निपातज्वराणांशान्त्युपायमाह। शटीशुंठीत्यादिना॥

सटीशुंठीरेणुःसुरतरुरनंताचवृहती घन-
स्तिक्ताभूनिम्बःखलुनवाभेरभीर्विरचितः क
षायःपीतोयंमधुकणाविमिश्रः शमयतीत्रि
दोषान्निःशेषं विषममपिजीर्णज्वरमपि ॥
॥ ४९ ॥

शठ्यादिनवाभिर्द्रव्यैर्विरचितोनिष्पादितःकषायःक्वा
थः अयंमधुकणाविमिश्रः मधुचकणाचताभ्यांयुक्तःपीतः सन्
खलुनिश्चयेननिःशेषं त्रिदोषमखिलंसन्निपातं विषमज्वरं चतु
र्थकादिज्वरं जीर्णज्वरमपिशमयतीत्यन्वयः। कषायेसिद्धेपूते
चमधुपिप्पल्यौपश्चात् पक्षेप्तव्ये। तत्रशटीगन्धपलाशी शुण्ठी
विश्वभेषजम् रेणुःपर्पटः सुरतरुर्देवदारुअनंतादुरालभा वृह
तीकण्टकारिका घनोमुस्ता तिक्ताकटुकीतिक्तोभूनिम्बः ॥

## भाषाटीका

सटी सोंठ पित्तपापड़ा देवदारु जवासा भटकटैया
मोथा कुटकी औरचिरायता इन नौ ओषधियोंका
काढ़ा मृत्तिका के पात्र में करै पीछे उसेछानले फेर उ-
समें मधु और पीपल का चूर्ण मिलाय के पान करेतो स
न्निपात के ज्वरों को तथा विषमज्वर और जीर्णज्वर को
नष्टकरै इससे रोगी सुखपावै ॥ ४९ ॥

अथकाहिकज्वरस्यौषधमाह। वासेति ॥

वासापटोलत्रिफलाद्राक्षाशम्याकनिंबजः
समधुःससितःक्वाथोहन्यादैकाहिकंज्वरं
॥ ५० ॥

वासाद्यष्टानांक्वाथःकषायःसमधुःससितश्चमाक्षिक
शर्कराभ्यांयुक्तःपीतः सन् एकाहिकंदिनेदिने एककालेयः

समायातिसज्वर एकाहिकस्तंहन्यात् नाशयेत् ॥ क्काथेसिद्धे शृते तत्र मधुमिते मक्षेसत्ये तत्रवासाअटरूषः पटोलः कुलकम् त्रिफला पथ्याबिभीत धात्रीणां फलानां समाहारः अजादित्वाद्दाप् द्विगोरितिचङीप् । द्राक्षागोस्तनी रम्याकोब्माधिघात: निम्बः सर्वतोभद्रः ॥

## भाषाटीका

अडूसा पलवल हरड़ बहेड़ा आमला दाख आरग्वध और नीबके पत्ते इन आठोंका काढ़ा करके छानके उसमें मधु और सर्करा मिलाय के पीले इससे दिन दिन आवे एकही समय पे बुखार सो नाहिं आवे ॥ ५० ॥

अथान्नतर्पणमाह तन्वङ्गीति ॥

तन्वंगिगंगोत्तरतीरभूमौममारहाकोप्यसुतस्तपस्वी । जलांजलिंतस्यकृतेददातुसैकाहिकः साद्यादितेनुजन्मा ॥ ५१ ॥ ÷ ॥ ÷ ॥

हे तान्वाङ्गि हेकृशावयवे तनूनि कृशान्यङ्गान्यस्याः । कोपिअज्ञान नाम जात्यादिः असुतो अविद्यमान पुत्रः तपस्वी तापसः गंगोत्तरतीरभूमौ भागीरथ्या वामकूल भूमिकायां हाइतिशोके ममार मृतो भूत । सैकाहिकः एकाहिकेन सहवर्त्तमानः पुमान् यदि चेत् नेतव अनुजन्मा कनीयान् भ्राता स्यात् तर्हि तस्यकृते अपुत्र तापसार्थं हत्यानां कर्त्तारि चेतिषष्ठी । भवतीजलंज्जालिं ददातु । गंगोत्तरतीरभूमौ योपुत्रस्तापसोमृतः सतृप्यतामिदं सतिलंजलं तस्मैस्वधानम इतिवाक्ये नाश्वत्थपत्रहस्त स्पर्शयेत ॥ पश्चात् ॥ अङ्ग वङ्ग कलिङ्गेषु सौराष्ट्रमगधेषुच । वाराणस्यान्च अहतं तदेकाहिक संस्मरत्ययंश्लोकः पठनीयः ॥ ५१ ॥

अथतृतीयकज्वरेपाचनमाह। सशिशिरइति

सशिशिरः सघनः समहौषधः सनलदः सकणः सपयोधरः समधुशर्करएषकषायकोजयति बालमृगाक्षि तृतीयकं॥५२॥

हेबालमृगाक्षि · बालमृगस्य हरिणशिशोरक्षिणी इवास्थिरे अक्षिणीनयने यस्यास्तत्सम्बोधने। एषः पुरोक्तो कषायकः क्वाथः समधुशर्करः माक्षिकेण सितयाच सहितः तृतीयकंज्वरं विशेषं तृतीयेह्निभवम् · कालप्रयोजनाद्रोगइतिकन् ।जयति नाशयति। कथम्भूतः। शिशिरं चंदनम् · घनं धन्यकम् · महौषधं · नलदमुशीरम् · कणामगधोद्भवा · पयोधरोमुस्तास्तैः सपदम्पूर्वैः सहवर्त्तमानः सिद्धेपूतेक्काथे मधुसितयोः प्रक्षेपः कार्यः। उक्तञ्च चक्रपाणिदत्तेन। महौषधामृता मुस्त चंदनोशीरधान्यके। क्वाथः स्तृतीयकं हन्ति शर्करामधु योजितइति॥

## भाषाटीका

चंदन · धानियां · सोंठ · खस · पीपल · औरमोथा · इन छः द्रव्योंका क्वाथ करके छानके और मधु सक्कर मिलाय के पीवे तो तीसरेदिन का ताप भागजाय ५२

अथचतुर्थकज्वरेनस्यमाह। चतुर्थकइति

चतुर्थकोनश्यतिरामठस्य घृतेनजीर्णेनयुतस्यनस्यात् लीलावतीनांनवयौवनानां मुखादलीकादिवसाधुभावः॥५३॥

॥५३॥

हेबालमृगाक्षीजीर्णेनपुराणेन · घृतेनआयेषा · युतस्य रामठस्य वाल्हीकस्य · नस्यात् · नस्तात् नासिकायांप्रदानात्

तियावत् नासिकायांहितम् शरीरावयवंवधत् । नसनासिकाया यत्र नसक्षुद्रोग्धिति नासिकाया नसादेशः ॥ तस्मात् चतुर्थकोज्व रः चतुर्थोन्हि भवोमद्वागदः । दिनद्वयं तु त्यक्त्वा ति क्रम्ययः स्यात् स हि चतुर्थक इत्युक्तेः चतुर्थकश्चतुर्थेन्ही त्यत्रत्वागमादिनं गृही त्वाव्याख्येयम् । नश्यति लयं प्राप्नोति । कस्मात् कइवनवयौव नानामतिक्रान्त मुग्धभावानां युवतीनां युनव्वलीलावतीनां क्रीड़ा युक्तानां विलासवतीनां वा शृङ्गारभावचेष्टाविशिष्टानां वा स्त दर्शीनां स्त्रीणां मुखावलोकात् मुखस्य वदनस्य अवलोका- दवलोकनाद्दर्शनात् साधुभावइव साधोः सज्जनस्य कुल जस्यभावः स्वभावो यथा नश्यति तथा । लीलाकेलिर्विलास श्च शृङ्गारभावजाक्रियेति हेमचन्द्रः ॥

## भाषाटीका

एक वर्ष से पुराना घी उसमें हींग मिलाय के जो उसकी नस्य लेवें तो चौथैया जो दोदिन बीच में दे के चौथे दिन तप आवे सो नष्ट होय ॥ ५३ ॥

नस्यान्तरमाह । अखंडितेति ॥

अखंडितशरत्कालकलानिधिसमानने चतुर्थकहरं नस्यं मुनिद्रुमदलाम्बुना ॥ ५४ ॥

हे अखण्डित शरत्काल कलानिधिसमानने अखंडितः सकलोयः शरत्कालेवर्षावसानसमये कलानिधिश्चन्द्रः तेन समानमाननं मुखयस्यास्तत्सम्बुद्धौ । मुनिद्रुमदलाम्बुना वं गसेनपत्रस्वरसेन नस्यं कृतं तन्नस्यं चतुर्थक हरं चतुर्थक- ज्वरस्य हन्तृ भवति ॥

## भाषाटीका

भाषाटीका

अगस्तिया के पत्ते को मलके निचोड़ लें और उस निचोड़े जल की नस्य लेने से चौथैया तप नष्ट होइ ॥ ५४

चतुर्थकज्वरे पाचनमाह । सुरदार्वित्यादिना ॥

सुरदारुशिवाशिवास्थिरावृषाविश्वैः कथितः कषायकः मधुनासितयासमन्वितः परिपीतः शमयेच्चतुर्थकं ॥ ॥
॥५५॥

सुरदार्वादिषड्भिः कषायकः क्वाथः कथितोऽभीष्टितः मधुनाकुसुमासवेन सितयाशर्करयाचसमन्वितः संयुक्तो येनचतुर्थकज्वरिणा पीतः कृतपानः तस्यचतुर्थवा चतुर्थेअन्हिभवंज्वरं शमयेत् शांतिंप्रापयेत् । तत्रसुरदारुदेवदारु शिवापञ्चरेखाहरीतकी यद्वास्वर्णवर्णाजीवन्ती हरीतकी शिवाआमलकी ः स्थिराशालिपर्णी वृषोवासकः विश्वंशुंठी ॥ उक्तञ्च ॥ सुरदारुशिवावृषाविश्वाशिवा स्थिरवारिभृतांतितया मधुना । अपहंति चतुर्थदिनप्रभवंज्वरमाशुकुभृत्यइवाधिपतिसहसा ॥ तथाह चक्रपाणिदत्तः । वासाधात्री स्थिरादारुपथ्यानागरसाधितः ॥

भाषाटीका

देवदारु हरड़ आमला सालिपाणी बांस और सोंठइन छओं का क्वाथ करके उसमें मधु और शक्कर मिलायके पान करै तौ चतुर्थकज्वर की शांति होइ ५५

अथशीतज्वरेभेषजमाह । तक्रमित्यादिना

तक्रंत्र्यूषणचूर्णयुक्तमथवामद्यंहसंती सती तद्वत्कंवल्लरक्तकानथकुथ्यां शीतातुरः शीलयेत् आलिंगेदथवा ...

दृढतरं तारुण्यमद्यालसाः काश्मीरागुरु
लिप्तपीवरकुचाः कामं कुरंगीदृशः ॥
॥५६॥

शीतातुरः शीतज्वरी त्र्यूषणचूर्णयुक्तं त्र्याणां त्र्यूषणेन
विश्वोपकुल्या मरिचानां समाहारस्त्र्यूषणम् तस्य चूर्णेन रज
सा युक्तं मिलितमेतादृशं तक्रं चतुर्थांशजलसंयुक्तं दधि शीलयेत्
सेवेत् ॥ यतः । तक्रं रुचिकरं वह्निदीपनं पाचनं परम् ॥ उदररोग
दास्तेषां नाशनं तृप्तिकारकम् ॥ त्र्यूषणं दीपनं हंति श्वासकासत्व-
गामयान् । गुल्ममेहकफस्थौल्यमेदः श्लीपदपीनसान् । अथ-
वाथवा पक्षान्तरे मद्यं हालिप्रियाशीलयेत् । यतमद्यं सर्वमपेयं उष्णं
पित्तकृद्वातनाशनम् । भेदनं शीघ्रपाकं च रूक्षकफहरं परम् ॥ अ
म्लञ्च दीपनं रुच्यं पाचनं वासकारि च तीक्ष्णं सूक्ष्मञ्च वैशदं
व्यवायि च विकाशि च ॥ अथवा सतीं शोभनां हसंतीमङ्गारधानीं
शीलयेत् ॥ यतः अग्निर्वातकफस्तम्भशीतकम्पविनाशनः ॥ आ
माशयकरश्चापि रक्तपित्तप्रकोपनः ॥ तद्वत्तथैव कंबलं रल्लकं वा
नसेवेत् । तत्र कंबलो मेषादिलोमनिर्मितः रल्लकः पर्वतीयो ने
पालकम्बलः कुतपाभिधश्छागलो मराचेत इतीविभेदः । यतः
। कंबलवंतं न बाधते शीतः । अथ तद्वत् कुर्यात् कन्थां सेवेत । यत
आहुः । भिक्षाप्राणस्य रक्षार्थं कन्था शीतनिवारणीति । अथवा-
सर्वोत्कृष्टपक्षे तारुण्यमद्यालसाः तारुण्यं यौवनं तदेव मद्यं-
मत्ततोत्पादकम् तेन तारुण्यमद्येन अलसाः क्रियामन्दाः आ
लस्ययुक्ताः पुनः काश्मीरागुरुलिप्तपीवरकुचाः काश्मीरं कुंकु
मम् अगुरुवंशिकम् ताभ्यां लिप्तौ दिग्धौ पीवरौ स्थूलौ कुचौ-
स्तनौ यासाम् एवंभूताः कुरंगीदृशः कुरङ्ग्याः हरिण्याः दृशौ नेत्रे इव
दृशौ यासां ताः नार्यः दृढतरं गाढम् आलिंगनं यथा भवति तथा कामं

यथेष्टं मुहुः पुनः पुनः आलिङ्गेत् उपगूहेत् यत्नउक्तम् । कूपोदकं-वटच्छाया नारीणांसुपयोधरौ । शीतकालेभवन्त्युष्ण उष्णकाले कशीतलाइति ॥

## भाषाटीका

जो शीतज्वर वाले को जाड़ा बहुत असह्य लगै तो सोंठ मिरच ओर पीपल इनका चूर्ण मिलाय के तक्र का पीवै। यद्वा मदिरा को पीवै वा निर्धूम अँगीठी आग्नि से भरी हुई को आगे धर के तापै तथा कम्बल वा गुदमा वा सौड़ ओढ़ै अथवा केशर और कुचन में लगाये हुए और यौवन मदमाती हरिणीके से हैं नेत्रा जिनके ऐसी कामिनीन को दृढ करके घेर २ मन भरिके आलिंगन करै तो शीतनिवृत्त होजाय ॥ ५६ ॥

अन्यदपि शीतज्वरे भेषजमाह । शक्राव्हेत्यादिना

शक्राव्हदद्रुघ्नवृषामृतानां निर्गुंडिकाभृंगमहौषधीनां क्षुद्रायवानीसहितः कषायः शीतज्वरारण्यहिरण्यरेताः ॥ ॥ ५७ ॥

शक्राव्हादिभिर्नवभिर्द्रव्यैरचितः कषायः शीतज्वर एवअरण्यं विपिनं तस्य हिरण्यरेतः आग्निर्भवति । तत्र शक्राव्हः इन्द्रजवः दद्रुघ्नश्चक्रमर्दकः वृषोवासकः अमृता गुडूची निर्गुंडिकासिन्दुकः भृङ्गोमार्कवः महौषधं शुण्ठी क्षुद्रानिदिग्धिकांयवानीवातारिः ॥

## भाषाटीका

इन्द्रजौ, कसौंदी अड़ूसा गिलोय संभालू भांगरा सोंठ भटकटैया इनका काढ़ा शीतज्वररूप वन नष्ट करनेमें आग्नि होहै ॥ ५७

अथानेकैः श्लोकैर्विषमज्वरस्य भेषजान्याह। वाङ्माधुर्येत्यादिना।

**वाङ्माधुर्यजितामृतस्मृतलतालक्ष्मीशि-**
**वाभेशिवा विश्वाविश्ववरेघनोघनकुचे**
**सिंहीचसिंहोदरि रंगैर्भिःपञ्चभिरोषधै-**
**र्मधुकणामिश्रः कषायः कृतः पीतश्चे-**
**द्विषमज्वरः किमुतदातन्वङ्गि नश्यीयते**
**॥ ५८ ॥**

अत्रपञ्चभिः सम्बोधनपदैः पञ्चौषधानांयोगः। हे वाङ्माधुर्यजितामृते वाचो वाण्याः माधुर्येणरामणीयकेन तेनजितं पराभूतममृतं पीयूषं यया सा तत्सम्बोधने। अमृतलता वत्सादनी। हे लक्ष्मीशिवाभे लक्ष्मीश्च शिवा च ते तयोः आभेव आभा शोभा यस्याः सा तत्सम्बोधने। शिवा आमलकी। पुनः हे विश्ववरे विश्वाभ्यः सर्वाभ्यो वनिताभ्यो वरे श्रेष्ठे। विश्वं शुण्ठी। पुनः हे घनकुचे घनौ निरन्तरौ कुचौ स्तनौ यस्याः तत्संबोधने। घनो मुस्तकः॥ पुनः हे सिंहोदरि सिंहवत् उदरं यस्यास्तत्सम्बोधने। सिंही कण्टकारी एभिरेतैः पञ्चभिः पञ्चसङ्ख्याकैरोषधैः रंगैः कृतो निष्पादितः कषायः क्वाथः। मधुकणामिश्रः माक्षिकसहितेन पिप्पलीचूर्णेन मिश्रः सम्पृक्तः चेत् यदि पीतः कृतपानः तदा तर्हि हे तन्वङ्गि तनूनि सूक्ष्माणि कृशान्यङ्गान्यस्यास्तत्सम्बोधने किमु विचारयत्वम् यद्वा त्वं सम्भावय क्रियायां योजय तां निश्चिनु। किमु सम्भावनायां स्याद्विचारे चापि दृश्यते इति मेदिनीकरः। विषमज्वरः सन्तताद्भेदभिन्नो ज्वरविशेषः नश्यीयते नाशो न भवति अपितु भवत्येवेति शिरश्चालनेनार्थः। यथाह भावमिश्रः। स्वप्रकाशे। मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः। पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्तीति।-

न्वराश्चाविषमाःसर्वेसन्निपातसमुद्भवाः।अथोल्बणस्यदोषस्य तेषुकार्य्यंचिकित्सतम्॥विषमेष्वथकर्तव्यमूर्द्ध्वंचाधश्चशो-धनम्।स्निग्धोष्णैरन्नपानैश्चशमयेद्विषमज्वरम्॥अथास्यभेदः।सन्ततःसततोऽन्येद्युस्तृतीयकचतुर्थकाविति॥

## भाषाटीका

जो विषमज्वर सामान्य सा आता होतो गिलोय, सोंठ· आँवला·मोथा·और कुंटकारी·इनपांचों का कूटकर क्का करलें·फिर उसे छान के उसमें पिसी पीपलों का चूर्ण और मधु मिलाय के पीवें तो विषम ज्वर नष्ट होय॥ ५८ ॥

सनागरायाइति।अयंश्लोकःपूर्वश्लोकार्थस्पष्टीकरणाय॥५९॥

नान्यानीति।

सनागरायाःसपयोधरायाःसासिंहिका याःसगुडूचिकायाः धान्याःकषायो मधुनावीमिश्रःकणाविमिश्रोविषमज्व रघ्नः॥ ५९ ॥ नान्यानिमान्यानिकिमौ-षधानि परन्तुकान्तेनरसोनकल्कात्। तैलेनयुक्तादपरःप्रयोगोमहासमीरेविष मज्वरेपि॥६०॥

हे कान्ते हे सर्वाङ्ग सुन्दरि· सर्वाङ्गसुन्दरी नारीकान्ता कथ्येषुकथ्यते।कास्यतेस्म· कर्मणिङन्तात् भावेक्तः विषमज्वर विषये अन्यानि कथ्यमानाद्भेषजादितराणि औषधानि भेषजानि ।किंमितप्रश्ने।नमान्यानि नमन्तव्यानि।केन।अपितुमान्या-न्येव।परंतुकिन्तु· महासमीरे अर्दितरोगे·विषमज्वरेपिसन्तता दौच·तैलेनातिलतैलेन·युक्तात्सम्पृक्तात्· रसोनकल्कात् पिष्टात् लशुनात् · अपरोऽन्यः · प्रयोगःउत्कृष्टोपायोन नास्तीत्यर्थः।

यथाह्भावमिश्रः। तिलतैललवणयुक्तः कल्केनशूनस्यसेवेत प्रातः। विषमज्वरमपहरते वातव्याधीनशेषांश्चेति॥

भाषाटीका

लहसन को पीस के तिल के तेल में मिलायके लवण भी गेर के प्रातःकाल सेवन करें तो आर्दितादिवात के रोग और विषमज्वर येनाहिं रहैं ॥६०॥

भवतीति॥

भवतिविषमहंत्रीचेतकीक्षौद्रयुक्ताभवति
विषमहंत्रीपिप्पलीवर्द्धमाना विषमज्वर
मजाजीहान्तियुक्तागुडेनप्रशमयातितथाग्ना
सेव्यमानागुडेन॥६१॥

क्षौद्रेणकापिलबर्णेन मधुनायुक्ता मिश्रिता चेतकी ह्यस्याहरीतकी विषमहंत्रीभवति विषमस्य सन्ततादिज्वरस्य नाशकर्त्रीभवति। पुनश्चवर्द्धमानापिप्पलीविषमहंत्री भवति। पिप्पल्यांबर्द्धमानत्वं यथात्रिवृद्धा पञ्चवृद्धा वा सप्तवृद्धाथवा-कणा। पिवेदष्टादशादिनं तथैवचापकर्षयेत्॥ षट्त्रिंशाद्धादिनैः सिद्धंपिप्पली वर्द्धमानकामिति॥ पुनश्च। गुडेनयुक्ता अजाजी जीरकः विषमज्वरं हन्ती। तथातक्रत गुडेन सहसेव्यमाना सेव्यताउग्नायवानी विषमज्वरं प्रशमयाति तस्योपशान्तिकरोतिअत्र क्रमेण योगचतुष्टयमुक्तम्॥

भाषाटीका

जो हरीतकी के चूर्ण को मधु में मिलाय के कछु दिन सेवन करे तो या तीन वा पांच वा सात इन्मों किसी एक क्रम से बढ़ाके पीपलों को दूध में औटावे पानी जलजाय तब दूध को पीके पसीना ले अथवा जीरे के चूर्ण को गुड़ में-

मिलायकेसेवनकरैतोविषमज्वरभागजाय॥ ६१ ॥

स्वकांतिजितेति

स्वकांतिजितरोचनेचपललोचनेमालती
प्रसूननिकरस्फुरत्कवरिपंचवक्त्रोदरि।
पटोलकटुरोहिणीमधुकचेतकीमुस्तकः
प्रकल्पितःकषायकोविषममाशुजेजीय
ते॥६२॥

हे स्वकान्तिजितरोचने।स्वकीययाकान्त्याशोभया
जिता पराजितारोचनारक्तकह्लारं गोपित्तं वायथासातत्संबो
धनेरोचनारक्तकह्लारे गोपित्तवरयोषितोः।रोचनः कूटशा
ल्मल्यां पुंसिस्याद्रोचके त्रिष्विति मेदिनीकरः।हे चपललो
चने चपलेतरले लोचने नेत्रेयस्याः सा तत्संबोधने।पुनःकिं
भूते हे मालती प्रसूननिकरस्फुरत् कवरिमालतीप्रसूनानांसु
मनाः कुसुमानां प्रकरोनिकरः तेनस्फुरन्ती प्रकाशमाना सक
ल्पना वा कवरी केशानां सन्निवेशोयस्याःसा तत्संबोधनेपुनः
हेपंचवक्त्रोदरि पञ्चवक्त्रः सिंहस्तद्वदुदरं यस्यास्तत्सम्बोधने।प
टोलास्तिक्तकः कटुरोहिणीकटुका मधुकंमधुयष्टी चेतकी
त्रैरेखाहरीतकी मुस्तकोमुस्ता एतैःपञ्चभिःप्रकल्पितो रचि
तः कषायको निर्यासः आशुक्षिप्रं विषमंसन्ततादिभेदभि
न्नंज्वरविशेषं जेजीयतेअतिशयेनजयति॥

## भाषाटीका

पलवल कटुकी मुल्हैटी हरड़ और मोथा इनपां
चोंकाकाढ़ापीनेसे शीघ्रही विषमज्वरजातारहै॥ ६२॥

किसुम्भमयसीति

किसुम्भमयसिप्रियेकुवलयंकराभ्यामसि

सम

इमंमदीयवचनंसुधारसंसमाकर्णय पु
राणविषमज्वरेकुलकनिंबासिंह्नीद्रुजाम्
ताघनकषायकोमधुयुतोवरीवर्त्तते ६३

हेप्रियेप्रीणातीतिप्रियाभार्या· तत्सम्बोधने·करा
भ्यांकुरुत· इतिकरोरुस्तोवाम्·यम्· इदंकुवलयंकमलकुमुदादि
सामान्यंजलजपुष्पंकमलमितियावत्।किमुम्भमयसी।किम
र्थंत्वयैतद्भ्राम्यते· अनेनज्वरव्याकुलतांविहायचित्तसाव-
धानंकुर्वीतिसूचितम्। तर्हिकिंकरोमीतिचेत् तत्राह सुधा
रससमंअमृतास्वादतुल्यंमदीयवचनंममोक्तिं· समाकर्णय
त्वाचित्तंस्थिरीकृत्वाशृणु।किंतत्· तदाहपुराणेति। पुराणवि
षमज्वरे पुरातने विषमज्वरे कुलकादिषण्णांकषायकः क्वाथो
मधुयुतोमाक्षिकसंयुक्तोवरीवर्त्तते आस्तिअतः किम्भयम्।
तत्रकुलकंपटोलस्यफलम्· निम्बः निम्बस्यत्वक्· सिंहीकंट
कारिका· इन्द्रजः इंद्रयवः। अमृतागुडूची· घनोमेघनामा॥

## भाषाटीका

पटुबल·नीमकीछाल·भटकटैया·इंद्रजौ·गिलोय·
औरमोथा इनका काढ़ापीके फिरपुरानेविषमज्वरसे क्या
भयहै॥ ६३॥ योभजेदिति

योभजेत्समधुश्यामां हेहेमकलशस्त-
नि। विषमेषुज्वरेष्वस्यनभयंतिकदा
चन॥६४॥

हेहेमकलशस्तानि हेम्नः कनकस्यकलशौघटौ·ता
विवस्तनौवक्षोजौ·यस्याः।स्वाङ्गाच्चोपसर्जनादसंयोगोपधा
दितिपक्षेङीप्· तत्संबोधने। योविषमज्वरी· समधुश्यामां· म
धुनामाक्षिकेणसह· श्यामां· त्रिवृत्तां· भजेतसेवेत्· तस्याविष

मेषुसन्ततादिज्वरेषु · व्यथादुःखानि कदाचन कस्मिन्नपि कले · नभवन्ति · कदाचिदपि नभवन्तीत्यर्थः ॥ अथवा यः पुमान् समधुश्यामां मधुनासहश्यामां कृष्णांपिप्पलींभजेत् तस्य विषमेषुज्वरेषु व्यथाः कदाचननभवन्ति । षडायः कामीसमधुश्यामां मधुनामद्येनसहश्यामां षोडशवार्षिकी भार्यांभजेत् तस्याविषमेशोः कामस्यपीडानभवन्तीत्यर्थः ॥ मधुमद्येपुष्परसेक्षौद्रे · इत्यमरः । श्यामाषोडशवार्षिकीति प्रसिद्धः । अस्या लक्षणम् । स्निग्धनखनयनदशनानि सुशयासानि नास्थिरस्नेहा । सुस्पर्शाशिशिर मांस त्वगङ्गना सामताश्यामेति·

## भाषाटीका

जोविषमज्वरी मधुकेसाथ कालेतिधारेकासेवन करे अथवा मधु के साथ पिसी पीपलोंका सेवन करे तो उसको विषमज्वर की पीड़ा कभी नहींहोय · ॥ ६४ ॥

क्षणमपीति

क्षणमपिचलतांजहीहि मुग्धेश्रृणुवचनंममतान्विसावधाना बसतिशिरसि मेघनादमूर्छब्रजातितरांविषमाविला सदृष्टे ॥६५॥

हे मुग्धेइअङ्कुरितयौवने · उदयद्यौवनामुग्धालज्जावैदिति मन्मथोदि लक्षणात् । हे विलासदृष्टे विलासोहावभेदोहृसो दर्शने नेत्रयोर्द्वृशौ वा यस्यास्तत्संबोधने । दृष्टि··· रिस्त्रयांद्वृशौ लोचनेदर्शनेऽपिचेति मेदिनीकरः । क्षणमपिनिर्व्यापारतयास्थिरी भूयकिंचिद्भूत् कालमपीतियावत् । चलतां चाञ्चल्यं जहीहित्यज । हेतान्वि हे कृशाङ्गि · तनूनिकृशान्यङ्गान्यस्याः तत्संबोधने । चोतोगुणबचनादि तिङीप् । सावधाना

मानोन्नोगेन सहवर्तमाना भवती · ममवचनं मदीया सुक्तिं श्रृणु आ कर्णय किंतत्तदाह वसतीति। मेघनादमूले मेघनादस्य तंडुली यशाकस्य मूलस्यमध्ये स्मिन् शिरसि उत्तमाङ्गे · वसतिवद्धे सति · त्रियमो विषमज्वरः · अत्रानितराम् अतिशयेन गच्छतीत्यर्थः।

भाषाटीका

चौलाईकीजडका शिरमें बांधना। विषमज्वरको खोताहै

हितान्विपुनश्च मम वचनं श्रृणु इति संबंधः। किंतत्तदाह। विषमपीति

विषममपि हरत्यसौ कषायो मधुमधुरो मदिरामृताशिवानां अह्नाय मूलसत-तन्विप्रकोप चरणसरोरुहयोलुठन् हठेन ॥ ६६॥

मधुमधुरः मधुना माक्षिकेण मधुरो मधुररसयुक्तो। मदिरामृता शिवानां त्रयाणामसौ कषायो निर्यूहः विषमं विषमज्वरं हरत्यपि हन्तिकिम् · हन्त्येव। अपिसम्भावना प्रश्नशङ्कागर्हासमुच्चये। तथा युक्तपदार्थे पिकामचाराक्रियासुचोतिमेदिनीकरः। अत्रदृष्टान्तः। कः कमिव तन्विप्रकोपत्वदीयं प्रकरं क्रोधमहमिव · यथाऽहं कराभितया किं कुर्वन् · तवचरणसरोरुहयोस्तव पादपद्मयोः सततमस्यान्तं · हठेन · बलात्कारेण · लुठन् अश्वइवेतस्ततः पतन्। अनेन गुरुमानो दर्शितः। सच अपरस्त्रीसम्भोगदर्शनाद्भिजन्मा · चरणपातभूषणदानाद्यपनेयो गुरुरित्युक्तः॥ तत्रमदिरानाम्नपुष्पा धातकी· अमृता गुडूची· शिवा आमलकी॥

भाषाटीका

मधुकेमेलसे मीठाजो धायकेफूल· और गिलोय तथा आमले इनका काढा पीना। विषमज्वरको हरैहै ॥ ६६॥

अवल्लेइति।

अवल्लेकमलातनुरक्तकल्ले चलदृक्कम
लेघृतकामकल्ले अमृताब्दाशिवम-
धुमद्विषमोविषमोविषमेषुविलासरते
॥ ६७ ॥

अवल्लेन अल्पंवलंयस्यायस्याःसा· तत्संबोधने अल्पार्थेऽञनञ् । हेकमलातनुरक्तकल्लेकमला श्रीस्तस्यास्त नुः शरीर तद्वद्रक्ता लोहिताकल्ला अंशमात्रंयस्याः सा·तत्संबोधने पुनः किम्भूतेचलदृक्कमले· श्रीक्कमलेइवचलती चंचले दृक्कमले यस्याः सा तत्संबोधने । पुनर्घृतकामकल्ले घृतोगृही तः कामेन अनुरागेणभोगेच्छया वा कल्लोमधुरध्वनिर्यया:सा· तत्संबोधने । पुनः हेविषमे द्वे असमाने विगतासमासद्दशीःय स्याः तत्संबोधने । पुनरच विषमेषु विलासरते विषमाः पंच इषवः शरायस्यतस्यकामस्यथोविलासो लीलातत्ररतिरनुरा गोयस्यास्तत्संबोधने । विषमोविषमज्वरं निमित्तंकृत्वाअमृ तादीनांत्रयाणांक्काथः कर्त्तव्यः । निमित्तात कर्मयोगइतिसप्त मी । अत्रक्काथस्यनिमित्तंविषमः तस्यामृतादिकर्मणा सह सं योगात् । तत्रामृतागुडूची· अब्दोमेघनामा· शिवांआमलकां एषान्द्वंद्वैक्यम· तत्त्वमधुमत् माक्षिकसहितम । एषांक्काथं पिवतोविषमीनस्यतीत्यर्थः ॥

## भाषाटीका

गिलोय-मोथा· और आंवलोंका काढ़ा करउस्में मधुमिलाकेपीवेंतो विषमज्वर अवश्य नष्टहोय ॥६७

अथज्वरहरंधूपनमाह । अयिति

अयिकुशाग्रसमान मतेसतेमतिमता

मऽतिमन्मथमंथरे ज्वरहरंरुगारिष्ट
शिवाबचायवहविर्जतुसर्षपधूपनं।
॥ ६८ ॥

अयीत्यनुरागपूर्वकंसम्बोधनम्। हेकुशाग्रसमान मते दर्भाग्रतुल्यातीक्ष्ण मतिर्बुद्धिर्यस्यास्तत्संबोधने। हेमति मतांमते पण्डितानांमध्येमाननीये। पुनः हे अतिमन्मथमंथरे अतिमन्मथोत्यर्थः कामस्तेन मन्थरे मन्दगामिनि। रुगाद्यष्टनां धूपनंधूपः ज्वरहरम्भवति ॥ तत्ररुक्कुष्टम् अरिष्टोनिम्बः शिवाधात्री बचागोलोमी यवः इन्द्रयवः हविर्घृतम् जतुलाक्षा सर्षपः गौरसर्षपः ॥

## भाषाटीका

कूट नीमकीत्वचा आंवला बच इंद्रजव घी लाख और स्वेतसरसों इनआठों का धुआं ज्वरकूहरैहै ६८ अथैकस्मिन्दिनेद्विवारमागच्छताज्वरस्यभैषज्यमाह ॥ तिक्तेत्यादिना।

तिक्तोशीरबलाधान्यपर्पटांभोधरैः-
कृतः। कषायःपुनःसमायांतज्वरं-
शीघ्रंविनाशयेत् ६९

तिक्तादिषड्भिर्द्रव्यैःकृतोनिष्पादितःकषायःपुनःसमायांतमेकस्मिन्नहनि एकवारमागत्य पुनर्द्वितीयवारं तस्मिन्नेवदिने आगच्छंतज्वरंशीघ्रंत्वरितं विनाशयेत् अदर्शनं कारयेत् ॥ तत्रातिक्ताकटुका उशीरंबीरणमूलम् बलाबाट्यालकः धान्यं धन्याकम् पर्पटः पित्तारिः अम्भोधरोमुस्ता ॥

## भाषाटीका

कुटकी खस खडियालो धानियां पित्तपापडा मोथे

इनछहोंका कांथ काढादेनमें दोवेर आनेवाले ज्वरको दूरकरे है ॥ अथ विषमज्वरश्वयादि रोगाणां प्रत्यक्ष्यामनाय घृतविशेषमाह ॥ गोपीत्यादिना

गोपीह्यामलकी स्थिरा मगधजा तिक्ता पयः पालिनी द्राक्षा श्रीफल धावनी हि भाविषा मुस्तेन्द्रजैः साधितं स्यादाज्यं विषमज्वरे क्षयशिरः पार्श्वव्यथारोच कच्छर्दिः शोफहलीमक प्रशमनं लीलाललतामंजरि ॥ ७० ॥

हे लीलाललतामंजरि लीलैव शृंगारादि चेष्टैव लता वल्ली तस्यै मंजरी वल्लरी । तत्संबोधने । गोप्यादिभिरोषधीभिः साधितं निष्पादितमाज्यं घृतं पानात्स्यादा विषमज्वरादीनां रोगाणां प्रशमनं सारणं भवति ॥ तत्र गोपी शारिवा । आमलकी निष्फला । स्थिरा शालपर्णी । मगधजा पिप्पली । तिक्ता कटुका । पयो ह्रीवेरम् । पालिनी त्रायमाणा । द्राक्षा मृद्वीका श्रीफलः शाण्डिल्यः धावनी वल्ली । हि संचंदनम् । विषा अतिविषा । मुस्ता मुस्तकम् । इन्द्रजः । कालिङ्गम् । विषमज्वरा ऽनियतकालज्वाजूर्तीः ॥ अथ क्षयरोगो निर्णयोपरक्षा । शिरः पार्श्वव्यथा सूर्यावर्तादि भेदास्य मस्तकपार्श्वभागपीडा ऽ रोचको ऽ रुचिरोगः । छर्दिर्वमनरोगः शोफः शोथरोगः । हलीमकः पांडुरोग भेदः । अस्य स्वरूपन्तु । यदा तु पांडोर्वर्णः स्याद्धरितश्यावपीतकः । बलोत्साहक्षयस्तन्द्रा मंदाग्नित्वं मृदुज्वरः ॥ स्त्रीषु हर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमाः । हलीमकं तदा तस्य विद्यादनिलपित्तजमिति

## भाषाटीका

सारिवा · आवला · सालपाणी · पीपल · कडुकी · सुगंधवाला · त्रायमाणा · दाख · बेल · कटेली · चंदन · अतीस · मोथा · और

इन्द्रजौ· इन चौदह औषधोंसे सिद्धभयाजोघी इसके पीने वासूंघने से । विषमज्वर· छर्दिरोग· आधासीसी· अरुचिरोग वमनकारोग· चार्दीकासूजन· और हलीमक जो पाण्डु रोग· विशेष ये सब मिटें ॥ ७० ॥

अथ कर्मजज्वरोपायानाह । चलदल तरुसेवेत्यादिना ॥

चलदलतरुसेवाहोममंत्रीत्रिनेत्रद्विज
सुरगुरुपूजाकृष्णनाम्नासहस्रं । मणि
धातृपरिदानान्याशिषस्तापसानांसकल
मिदमरिष्टंस्पष्टमष्टज्वराणाम् ॥ ७१ ॥

इदंचलदल तरुसेवादिकंसकलं सम्पूर्णं यथाविधिश्रद्धयानुष्ठितमष्टज्वराणां वातिकादीनामरिष्टम्· अरिष्टं तेष्टतीति अरिष्टं नाशनंभवतीतिशेषः । अष्टज्वरायथा ॥ दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भवः । ज्वरोष्टधा पृथग् द्वन्द्वसंघातागन्तुजः स्मृतइति । तथाहि । वातिकः पैत्तिकश्चैव कफजो वातपित्तजः वातश्लेष्मप्रभूतश्च पित्तश्लेष्मोद्भवस्तथा ॥ संघातागन्तुजावेवं ज्वरोष्टविधउच्यतइति । स्पष्टंग्रंथान्तरेस्फुटम् । किन्तत् इत्यपेक्षायामाह चलदलेति । तत्रचलदलतरुः पिप्पलवृक्षः तस्यसेवाविधिनिर्दिष्टवर्त्मना पूजाहोमः प्रतिकूलग्रहमंत्रेणतमेवग्रहमुद्दिश्य-विधिवत्स्थापितेग्नौ ग्रहप्रीत्युत्पादकस्यहविषः प्रक्षेपः । मंत्रः प्रतिकूलग्रहमंत्रस्य सिद्धमंत्रस्य वाजपः । त्रिनेत्रः सदा-शिवस्तस्य पूजासहस्रकलशाभिषेकादिरूपा । द्विजानां ब्राह्मणानां भोजनाच्छादनाद्यर्पणेन प्रीत्युत्पादनरूपापूजा । सुराणांवास्तुग्रहयागादिषुपूजा । गुरोः परमार्थपददानकर्तुर्ब्राह्मणस्यच पूजा । गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुरिति । सर्वेषामेववर्णानांजन्मनाब्राह्मणो गुरुरित्यादिस्मृतेः ॥ कृष्णनाम्नां सहस्रम्

विष्णोर्नामसहस्रस्य पाठः। भवत्यरोगो द्युतिमान् बलरूपगुणा न्वितः रोगार्त्तोमुच्यते रोगादिति फलश्रुतेः। मणेर्धृतिः मणीनां माणिक्यादि रत्नानां ग्रहदोषशान्त्यर्थं ग्रहाविप्रान्नयावेध्धारणम्। ग्रहगणायोग्या। माणिक्यमुक्ताफलविद्रुमाणि गारुत्मकं पुष्पकवज्रनीलम्। गोमेदवैदूर्यकमर्कतः स्यूरत्नानीति। परिदानानि घृतकुम्भादीनि ज्वरोक्तानि दानानि। तापसानां तपस्विना माशीर्वादा मङ्गलप्रार्थनाः। यदुक्तं ग्रन्थान्तरेस्पष्टमिति तदाह भावमिश्रः। सोमं सानुचरं देवं समातृगणमीश्वरम्। पूजयन्प्रयतः शीघ्रं मुच्यते विषमज्वरात्॥ सोमउमासहितम् सानुचरंनन्द्यादिगणसहितम् प्रयतः पवित्रः। विष्णुंसहस्र मूर्द्धानं चराचरपतिं विभुम्। स्तुवन्नामसहस्रेण ज्वरान्सर्वा न्व्यपोहति॥ सहस्रमूर्द्धानमितिसहस्रशीर्षेत्यादिवेदाभिहितम्। नामसहस्रेणभारतोक्तेन॥ ज्वरस्यापिदेवतात्वात्-पूजाकार्या। यतआहविदेहः॥ तीर्थायतनदेवाग्निगुरुवृद्धोपसर्पणैः। श्रद्धयापूजनैश्चापि सहसाशाम्यतिज्वरः॥ तीर्थमृषिजुष्टंजलम्। आयतनं देवाधिष्ठितं जालंधरपीठ पुरुषोत्तम क्षेत्र श्रीशैलादीति दानैर्दयाभिरपि चाद्विजदेवतागोगुरुवचनप्रणतिभिश्च जपैस्तपोभिः। इत्युक्तपुण्यनिचयैरपचीयमानाः। प्राक्पापजायादिरुजः प्रशमंप्रयान्तीति भैषजाचार्यश्च॥ ÷

## भाषाटीका

पीपलकीपूजा· दुष्टग्रहकेमंत्रकरकेहोम· दुष्टग्रहकीप्रीतिकेअर्थउस्केमंत्रकाजप· सहस्रकलशाभिषेक करके महादेवजी कीपूजा· वास्तुयाग औरग्रहयाग द्वारादेवतान कीपूजा· महाभारतोक्तविष्णुसहस्रनाम-का पाठ· ज्वरकोनष्टकरैऐसेरत्नोंका धारण· ज्वरके

नाशक ऐसे घृत कुंभादिकोंका दान · और तपस्वीजनों के आ
शीर्वाद इत्यादि पुण्यकर्मों करके सब ज्वरोंकी शांति होती।

अथ लोलिम्बराजः स्वकांतां सम्बोधयन् ज्वरयुक्तज्वर
मुक्तयोर्हितमुपदिशति। अयीति॥

**अयि रत्नकलेकलानिधे कुशले कोकिलकोमलस्वरे ज्वरवान् ज्वरमुक्तोपि यथा लघु कुर्यादशनं दिनात्यये॥७२॥**

अयीति कोमलालापे · हे रत्नकले रत्नानि स्त्रीजातिश्रेष्ठा-
नि कला अंशा यस्यास्तत् सम्बोधने। हे कलानिधे कलाश्च तुष्याष्टि
संख्यकाः निधीयन्ते यत्र · डुधाञः कर्मण्यधिकरणे चेत्याधिक
रणे किः तत्सम्बोधने। यद्वा कला चन्द्रकला निधीयते ऽनेन हे श
शिवदने। हे कुशले हे विज्ञे। हे कोकिलकोमलस्वरे कोकिलस्य-
पिकस्येव · कोमलो मृदुलस्वरो यस्यास्तत्संबोधने। ज्वरवान् ज्व
रो विद्यते यस्य सः ज्वरवान् विगतोज्वर मुक्तो वा दिनात्यये वासराव
साने अशनं भोजनं लघु अगुरु कुर्यात॥ ज्वरमुक्तस्य लक्षणमाह
माधवकरः। स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च। क्षव
थुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणमिति-

## भाषाटीका

क्या ज्वरवाला क्या बिना ज्वरवाला सांझको हल्का भोजन
करना चाहिये॥७२॥

**इति लोलिम्बराजकृतो ज्वरप्रतीकारः प्रथमो वि
लासः॥१॥**

इति श्रीमुकुलाबध्यूत श्रीमत्परमहंस परिव्राजकाचार्य श्रीमद्द
ग्विगानन्दनाथ भारती शिष्य बाला बघूल श्री सुखानन्दनाथ विर
चितायां सुखानन्दिन्यां लोलिम्बटीकायां ज्वरप्रतीकारनाम

॰ प्रथमविलासस्यप्रकाशार्थः।

अथक्रमप्राप्तस्यज्वरातिसारस्यरुक्प्रतिक्रियामाह। अमृतेति॥

अमृतातिविषासुरराजयवस्तनयित्नुकि
रातकविश्वपयः अतिसारहरंज्वरना
शकरंशृणुनिर्जितकुञ्जरकुम्भकुचे१

हे निर्जितकुञ्जर कुंभकुचे निर्जितौ पराजितौ कुञ्जरस्य-गजस्य कुंभौ हस्तिशिरस्थौ मांसपिण्डौ कुचाभ्यांस्तनाभ्यांयया तत्संबोधने। अमृतादिषण्णांपयः क्वाथस्तच्छृणु आकर्णय। कीदृशम् अतीसारहरं हस्तीतिहरम् अतिसारस्यान्नगन्धेर्हरम् पुनः ज्वरनाशकरंज्वरस्य विनाशकरम् ज्वरातीसार नाशनम्॥तत्रअमृतागुडूची अतिविषाशुक्लकन्दा सुरराजयवो वत्सकः स्तनयित्नुर्मुस्तकः किरातको भूनिम्बः विश्वंशुण्ठी यथाह चक्रपाणिदत्तः। नागरातिविषामुस्तभूनिम्बामृतवत्सकैः सर्वज्वरहरः क्वाथः सर्वातीसारनाशन इति॥

## भाषाटीका

गिलोय अतीस इंद्रजौ मोथा चिरायता और सोंठ इनका काढ़ा सब अतीसारों तथा सबज्वरों को नष्टकरैहै १

क्वाथान्तरमाह। शीतेत्यादिना

शीतोशीरकयुग्मवत्सकटुकीपद्माब्द
धान्यामृता भूनिम्बाम्बुदबालबिल्व
कविषाविश्वौषधैःसाधितः। क्वाथो
मासिकसासिकोविजयतेहृच्छ्वासतृ-
ष्णावमीदाहारोचकसंगसंगचतुरः
सर्वातिसारामयान्॥२॥

शीतादिन्द्रतुर्दशभिरौषधिभिः साधितोनिष्पन्नः मासिकसा-

सिकः मधुप्रक्षेपयुक्तः क्वाथः कषायः सर्वातिसारामयान् अ-
खिलानुदरामयान् विजयते जयति। कथम्भूतः क्वाथः श्वा-
सतृष्णावमीदाहारोचकसङ्गभङ्गचतुरः श्वासः हिक्कारोगः तृ
ष्णापिपासा वमीवान्तिः दाहः संतापः अरोचको रुचिरोगः
एषुसङ्गः अङ्गहश्वासीतृष्णाबानित्याद्याभिनिवेशस्तस्य भङ्गे भ
ञ्जने चतुरो निपुणोयं क्वाथः तत्र शीतं रक्तचन्दनम् कषाय
लेपयोर्ग्राह्यं चन्दनं रक्तचंदनमितिवचनात्। उशीरकयुग्मम्
उशीरं वीरणमूलमेकम् अपरं लामज्जकं तच्च उशीरवत् पीतच्छ
विवर्णमत्रतालिभेदः। वत्सकः कुटजः वृकीपाठा पद्माह्व क
मलम् धान्यं धन्याकम् अमृता गुडूची भूनिम्बश्चिरिक्तकः अ
म्बुदो मुस्ता बालं ह्रीवेरम् बिल्वकं बिल्वपेशी विषा अतिविषा
विश्वौषधं शुण्ठी॥

## भाषाटीका

रक्तचन्दन, खसदोनों, कुटजकी छाल, पाठाजिसेप
वैती पटाड़ कहैहैं, कमल, धनियां, गिलोय, चिरायता,
मोथा, सुगंधबाला, बेलगिरी, अतीस, औरसोंठ इनकाका
ढापीनेसे, हुचकी, प्यास, वमन, अन्नमें अरुचि और
सबभांतके अतीसार येसब रोगजीते जांय॥ २ ॥

अथातिसारेपञ्चमूल्यादिक्वाथमाह। पञ्चाङ्गीति॥

पंचाङ्गी हयपदवल्लेन्द्रबीजत्वकसैल्य-
तिक्ता मृतविश्वाबिल्वैः ज्वरातिसा
रान् सवमीन् सकासान् सश्वासशूलान्
शमयेत्कषायः॥३॥

पञ्चाङ्ग्यादि पञ्चदशाभिः कृतोयः कषायः सः सवमीन्
सकासीन् सश्वासशूलान् एतादृशान् ज्वरातिसारान् शमये

दित्यन्वयः । तत्र पञ्चाङ्घ्रिः शालपर्ण्यादि पञ्च मूलं प्रागुक्तम् वृ कीपाठा अब्दोमुस्ता वलाबाट्यालकः इन्द्रबीजत्वक् बीजं च त्वक्च अनयोः समाहारः । इन्द्रस्य बीजत्वक इन्द्रस्य कुटजस्य बीजं फलमिन्द्रयवम् तस्यैवत्वक् कुटजवल्कलम् सेव्यमु शीरम् तिक्ता कटुकी, अमृता छिन्नरुहा विश्वं नागरम् वि ल्वं बिल्वपेशिका आमां बिल्व मित्यर्थः ॥ यतः । फलेषु प क्वेषु यो गुणः समुदाहृतः । बिल्वादन्यत्र संज्ञेयो बिल्वमामं गुणोत्तर मित्युक्तम् ॥

## भाषाटीका

लघुपञ्चमूली पाठा मोथा बाडियाला इन्द्रजौ कुटजकी छाल खस कुटकी गिलोय सोंठ बेलगिरी इन १५ औषधियोंका काढ़ा वमन खांसी स्वास और शूल इनके साथ ज्वरातीसार को शान्ति करे ॥ ३ ॥

हे लोलिम्बराज पञ्चमूलद्वयोस्तिष्ठति सत्यास्मिन् किंगुरु पचमूलं प्रक्षेप्तव्यं लघुवेति प्रियया पृष्टे तत्राह । कफाधिकइति ॥

**कफाधिके वा पवनाधिके वा हि प्राधि केवा गुरु पंच मूलम् पित्ताधिके वा लघुपञ्चमूलं पुनः पुनः एणाक्षि केम्र गांदि ॥ ४ ॥**

हे मृगाक्षि कफादिके ज्वरातिसारे अथवा पवना धिके वाद्ध्याधिके वातकफाधिके गुरुपञ्चमूलं प्रक्षेप्त व्यम् । यथाह चक्रपाणिदत्तः । बिल्वश्योनाकगाम्भारी पाट लागणिकारिकाः । कफवातहरं श्रेष्ठं पञ्चमूलमिदं महादिति ॥ पित्ताधिके लघुपंचमूलं प्रक्षेप्तव्यम् । तदाह चक्रपाणिदत्तः शालपर्णी पृश्निपर्णी वृहतीद्वय गोक्षुरम् । वातपित्तहरं हृष्यं

कनीयः पञ्चमूलकमिति ॥ ४ ॥

॥ अथ शोकातिसारस्याचिकित्सामाह । सदेवदार्विति ॥

सदेवदारुः सविषः सपाठः सजंतुशत्रुः सघनः सतीक्ष्णः सवत्सकः क्काथ उदाहृतोसौ शोकातिसाराम्बुधिकुम्भजन्मा ॥ ५ ॥

हे मृगाक्षि असौ क्काथः शोकातिसाराम्बुधिकुम्भजन्मा उदाहृतः शोकेनअतीसारः सएवाम्बुधिः तस्यकुम्भजन्मा अगस्त्यः । कोसौतमाह सदेवदार्विति । देवदारुणापूतिकाष्ठेनसहितः सविषः विषयाप्रतिविषयासहितः सपाठः पाठयाअम्बष्ठ्या सह सजन्तुशत्रुः सहजन्तुशत्रुणाविडङ्गेन सघनः सहघनेन मुस्तेन सतीक्ष्णः सहतीक्ष्णेन मरिचेन सवत्सकः सहवत्सकेन कुटजेन सर्वत्रसहस्यसः संज्ञायामितिसादेशः । भयशोकसमुद्भूतौ ज्ञेयौवातातिसारवत् । तयोर्वातहरीकार्या हर्षणाश्वासनैः क्रिया । हर्षणाश्वासनपूर्विकावातहरीक्रियाकार्येत्यर्थः ॥

## भाषाटीका

देवदारु अतीस पाठा विडंग मोथा मरिच और कुटजकी छालइनका काथपीनेसे शोकसे भया जो अतीसार सो जाता रहै ॥ ५ ॥

## इतिज्वरातिसारः

अथातिसारेपाचनान्याह । अयीत्यादिपद्यैः

अयिप्रियप्रीतिभृतांमुरारौविंबालक श्रीघनधान्यविश्वैः यस्याप्यतीसारस्रुजानतस्याविंबालकश्रीघनधान्यविश्वैः ॥ ६ ॥

अयिप्रिये इतिसंबोधनम् । सुरारैश्रीकृष्णेप्रीतिभृतां हर्षसुदृढतां पुरुषाणां · बालकश्रीघनधान्यविश्वैः किंनाकि मपिप्रयोजनम् तत्रबालकः पुत्रः श्रीर्लक्ष्मीः घनधान्यं धान्य समूहः विश्वंप्रपञ्चजालम् । यस्यमनुजस्य · अतीसाररुजः अतिसारभवारुजो रोगानसन्तितस्यापि · बालकश्रीघनधा न्यविश्वैः किम् नाकिमपिफलम् । अत्रबालकंह्रीबेरम् श्री- र्बिल्वम् · घनोमुस्ता · धान्यंधन्याकम् · विश्वं शुण्ठी । यथा ह चक्रपाणिदत्तः । धान्यकंनागरं मुस्तं बालकं बिल्वमेव च आमशूलविबन्धघ्नं पाचनंवन्हिदीपनमिति ॥

## भाषाटीका

सुगंधबाला · बेलगीरी · मोथा · धनियां और सोंठ इनपांचोंका क्वाथ पीनेसे अतीसार रोगदूर होय ॥ ६ ॥

पित्तातिसारइति ।

## पित्तातिसारोधान्याम्बुबिल्वाब्दानां निरुध्यते । केनाऽभूज्ञायतेकर्त्ता पंडितेनत्वयाविना ॥ ७

धान्याम्बुबिल्वाब्दानां केन जलेन पित्तातिसारः पैत्ति कमतिसरणं · निरुध्यतेनश्यति । अत्रास्मिन्पद्ये · त्वयापंडिते न विदुषा विनाकेनकर्त्ताज्ञायते · त्वयैवज्ञायतेनतुमूर्खेणेत्य र्थः । तत्रधान्यंधन्याकम् · अम्बुह्रीबेरम् · बिल्वमामम् · अब्दो मुस्तकः । यथाह । इदधान्यचतुष्कस्यात् पैत्तेशुण्ठी · बिना पुनरिति ॥

## भाषाटीका

जोपित्तातीसारहोयतो · धनिआ · सुगंधवाला · वेलगीरी औरमोथा इनका काढ़ाकरके जब वह ठंडा होजाय तब

पीवै तो पित्तातीसार रोग नष्ट होय ॥ ७ ॥

इन्द्रजेति।

इन्द्रजमेघमदाकुसुमश्रीरोध्रमहौष-
धमोचरसानां चूर्णमिदंगुडतक्रस
मेतंहन्त्याचिरादतिसारमुदारम्॥८॥

इदमिन्द्रजादीनां द्रव्याणां चूर्णंसम्यक्प्रमाणेनितरुज्ञः ·गुड़तक्रसमेतं इक्षुपाककालशेयाभ्यांसंयुक्तम्·उदारमतिसारं महान्तमतिसरणम्·अचिराच्छीघ्रम·हन्तिनाशयति।तत्रेन्द्रजभद्रयवम्·मेघोमुस्तक: मदाकुसुमंधातकीपुष्पम्·श्रीविल्वमामम्·रोध्रोगालवः·महौषधंशुण्ठी·मोचरसःशाल्मलीवेष्टः।अत्राहलटकनसूनुः।मुस्ताबत्सकबीजं मोचरसो विल्वधातकीलोध्रम्।गुडमथित सम्प्रयुक्तं गङ्गामपिवेगवाहिनींरुन्ध्यादिति॥

## भाषाटीका

इन्द्रजौ·मोथा·धाईकेफूल·बालविल्व·लोध·सोंठ·औरसंमलकागूंद इनसातोंकेचूर्णकोगुड़ औरतक्र अर्थात छाछमें मिलायकेपीवेतो अतिप्रबल अतीसार को भी नाशकरदे शीघ्रही ॥ ८ ॥

कल्याणीति

कल्याणिकांचनलताललिताङ्गयष्टे-
ताम्बूलशाल्मलिबदनेलकन्सुणुष्व श्री
दीमदाकुसुममोचरसाजमोदास्तक्रान्वि
ताः प्रशमयन्त्यतिसारमुग्रम्॥९॥

हेकल्याणि हेभद्रे·हेकाञ्चनलता ललिताङ्ग·यष्टेकाञ्चनलतेवहेअङ्ग:शरीरंशरवावत ललिता मनोहरा

अङ्गयष्टिर्देहयष्टिका शरीरलतावा यस्यास्तत्सम्बोधने। पुनः हे ताम्बूलशालिबदने ताम्बूलेन पर्णेन शालतेशोभतं इति·ता म्बूलशालि·स्नादृशवदन मानन यस्य स्तत्सम्बोधने। पुनः हेलले अङ्गनोत्तमे। शृणुष्व आकर्णय मदृचनमितिशेषः। किंतत् तदाह रुण्ठीति तक्रान्विताः दण्डाहतसंयुक्ताः शुष्ठ्यः उग्रमुत्कटमतिसारमति भरणं प्रशमयन्तीनाशयन्ती त्यर्थः॥ तत्र शुण्ठीविश्वम्· मदाकुसुमधातकीकुसुमम्। मो चरसः शाल्मलीवेष्टः अजमोदा उग्रगन्धा॥

## भाषाटीका

सोंठ·धाईकेफूल·मोचरस· औरअजमोदा· इन चारोंके चूर्णकोतक्रमें मिलाके पीनेसे अतीसार रोगनष्टहोयहै॥

अतिसारेति

## अतिसारप्रशमनीचित्रपत्रकशोभिता
## वृद्धिदानतनुचन्द्रैश्च श्यामाश्यामे विरा
## जते॥१७॥

हेकल्याणि श्यामागोपीराजते अतिशयेन शोभते कथम्भूताचित्रपत्रकशोभिताचित्राणि अद्भुतानियानिपत्र काणिपल्लाशानितैः शोभिताकान्तियुक्ता·पुनः अतनुचन्द्रैरन ङ्गस्नेर्वृद्धिदास्फातिप्रदापुनः·कीदृशी अतिसार प्रशमनी अति सरणस्यवधकर्त्री यथोक्तं निघण्टौ शारिवा युगलंस्वादुस्नि ग्धंशुक्रकरंगुरु। अग्निमान्द्यारुचिश्वास कासामत्रिषनाश नम्॥ दोषत्रयास्रप्रदरज्वरातीसार नाशनामिति॥ यद्वा·श्यामा प्रियङ्गुः साचचित्रपत्रकशोभिता· जलपिप्पलीसमेता· अति सारप्रशमनीभवति। तत्रदृष्टान्तः। केवलश्यामेव षोडशवार्षि कीस्त्रीव। कथम्भूता श्यामाचित्रपत्रकशोभिताचित्रमद्भुतम्

यत्पत्रकंपत्रभङ्गः स्तनकपोलादिषु कस्तूरिकादिभीरचिता पत्रावलीतेनशोभिताअलङ्कृता। पुनः कीदृशीस्यामाअतिसा रप्रशमनी अतिसारोतिवलस्तस्य प्रशमनकर्त्री सङ्गमाहल हानिकर्त्रीत्यर्थः। उक्तञ्च। मद्योवलहरानारी सद्योवलक रंपयः। स्त्रियंगच्छेत्पयः पीत्वाताञ्चत्यक्ता पुनःपिवेदि ति। सारोवलेस्थिरांशेचेत्यमरः। पुनः कथम्भूतास्यामा अत नुवन्हेर्वृद्धिदा। यथोक्तम्। श्यामागुणवतीकान्ताप्रियाम धुर्भाषिणी। रक्तेस्वघ्नदायानारी सास्त्रीश्यामास्मृतेति॥१०॥

वालेद्वाते॥

वालेवालकताप्रवाललितिताकाराङ्घ्रि हस्ताधरे मल्लीमाल्यलसत्कुचाद्रिधरे रत्नज्वलन्मेखले चंचत्कुण्डलमण्डले विजयते रक्ताग्नयूलान्विता तां सारंकुटजाब्दविल्वकविषादीच्च: कषायःकृत:॥११॥

हेवाले हेश्यामे हे वालकता प्रवालललितकाराङ्घ्रि हस्ताधरे वालकोमलायालतावल्ली शाखिशाखावानस्यांयं प्रवालाः नवीनपत्राणि तद्वत्ललिताकारो रुचिराकृती अङ्घ्रीच रणाचहस्तौ पाणीचअधरो ओष्ठोच यस्याः तत्सम्बोधने।- पुनः मल्लीमाल्यलसत्कुचाद्रिधरे मल्लीमल्लिकातस्यामा- ल्यंपुष्पस्रक् मालेवमाल्यम् चतुर्वर्णादित्वात् स्वार्थेष्यञ् तेनलसन्तौ प्रकाशमानौ कुचावेवाद्रिधरौ भूधरौयस्यास्त त्सम्बोधने। पुनः हेरत्नज्वलन्मेखले रत्नेश्रोणिवयमुक्ता- मरकतादिभिर्ज्वलन्तीदेदीप्यमानामेखलाकाञ्ची यस्यास्त त्संबोधने। पुनः हेचंचलकुंडलमण्डले चंचतीजाज्वल्यमाने

कुण्डलयोः कर्णवेष्टन योर्मण्डलेचक्रवालेकपोलस्वरूपे यस्य स्ततसम्बोधने। कुटजादिपंचभिः कृतोनिष्पादितः कषायो-निर्यूहः रक्तामशूलान्वितातीसारं रक्तामशूलरोगाविशेषाः प्रसिद्धास्तैर्युक्तमतिसरणंविजयते जयति। तत्रकुटजोवत्सकस्तस्यत्वक् अब्दोमुस्तकः विल्वंबाल्बश्रीफलफलं स्वार्थेकः विषाअतिविषा उदीच्यंह्रीवेरम्। यथाहुः। सवत्सकःसातिविषःसाबिल्वःसोदीच्यमस्तैरचकृतःकषायः। सामेसशूलेसहशोणितेच।चिरप्रवृत्तेऽपिहतोऽतिसारे इति॥

## भाषाटीका

रुधिर और आंव और शूल इन करके सहित जो-अतीसार होयतो कुटजकी छाल मोथा बेल सोंठ अ-तीस और सुगंधबाला इनका काढ़ा पीवेतो रोगी सुखी होय॥ और अतीसार नष्ट होय

अथमहद्गङ्गाधराख्यंचूर्णमाह। धातकीति

**धातक्यामलकीपयोधरशुकीकट्टङ्ग-यष्टीमधुश्रीजंबाम्रफलास्थिनागरिविषाह्रीवेरलोध्रेन्द्रजैः। तुल्यांशैर्विहितं सतंडुलजलंगंगाधराख्यं महच्चूर्णं-तूर्णमपाकरोति सकलंजीर्णातिसार स्मरम्॥१२॥**

धातक्यादिचतुर्दशद्रव्यैतुल्यांशैः समभागैर्विहितं निर्मितं महद्गङ्गाधराख्यं वृद्धगङ्गाधराभिधं चूर्णरजः सतण्डुलजलं षष्टिकादिधान्यं धौततोयेनसहपीतं सकलंससविधंजीर्णातिसारं पुरातनमतिसरणंतूर्णं शीघ्रमपाय करोति नाशयतीत्यर्थः। यथोक्तम। सशम्याकांधातुररिनप्रदद्दोवर्चोन्मिश्रो वासुनाथ

प्रणुन्नः सरत्यतीवातिसार तमाहुर्व्याधिं घोरं पाड्गुवन्तं वदन्ति॥ एकैकशः सर्वशश्चापिदोषैः शोकेनान्यः षष्ठआमेन चोक्तइति साम्यादागन्तु कत्वेनातीसारं भयजम्मुनः। वांछन्ति सप्तमङ्क्वचि दुदरामयमुत्कटम्॥ तत्रधातकीमद्यपुष्पातस्याः पुष्पाणि·आमलकीधात्रीफलम्·पयोधरोमुस्तकम्·चक्रीपाठा·कट्वङ्गः श्योनाकः यष्टीमधुयष्टी·श्रीः आमांविल्वफलम्·जम्बूनीलफलातस्याअस्थि·आम्रफलास्थिरसालस्यमज्जा·नागरं शुण्ठी·विषप्रितिविषा·ह्रीवेरम् वालम्·लोध्रस्तिरीटः इन्द्रजमिन्द्रयवम्॥

## भाषाटीका

धाईकेफूल·आंवले·मोथा·पाठाजिसेपहाड़ी पटुं
इ और गोंड़िये आकनादी कहते हैं·सोनापाठाजिसे
गोंड़िये शोनागाछ कहते हैं·जेठीमधु·वेलगिरी जाम
नकीगुठली·आमकीगुठली·सोंठ·अतीस·सुगंधवाला
लोध·औरइन्द्रयव इनका चूर्ण बनावे·औरउसेफांक
के ऊपर से तंदुलों के धोवन जल को पीले तो सातोंभां
तके पुराने अतीसार शीघ्रही नष्ट होंय·रोगीसुखीहोय॥२

अथरुधिरातिसारे पाचनमाह। अयीति

अयिकंदुकानंदकस्तानि प्रमदारूपमदा
पहारिणि रुधिरातिसृतौ कषायकः
समधुर्दाडिमवत्सकत्वचः॥१३॥

अयइति कोमलालापे हेकन्दुकानन्दकस्तानि नंदतस्तच्छीलौनिन्दकौ निन्दाईसौतेवुन्र·कन्दुकस्यगेन्दुकस्य निन्दकौनिन्दाशीलौस्तनौ कुचौयस्यास्तत् सम्बोधने। पुनः प्रमदारूप मदापहारिणि प्रमदयाति पुरुषं मदोहर्षे अत्रदाः

प्रमदायाउत्तमास्त्रियाः यद्रूपंमनोहराकांतिः तनयोमदोइं रूपलावण्य सम्पन्नेति गर्वस्तमपहर्त्तुं शीलमस्यास्तत्संबोधनं दाडिमवत्सकत्व चदाडिमांमिष्टकरकः तस्यफलस्य वत्सकः कुटजः अनयोस्त्वक वल्कलम्. तस्याः कषायकः क्वाथः-कथम्भूतः समधुः माक्षिकप्रक्षेपयुक्तः रुधिरातिसृतौरक्तातिसारनाशने निमित्तं भवतीत्यर्थः। यथोक्तम्। कषायो मधुना पीतस्त्वचोदाडिमवत्सकात्। सद्योजयेदतीसारं सरक्तं दुर्निवारणमिति॥

## भाषाटीका

मीठेदाडिमके फलकीत्वचा. औरकुटजकीछाल इनका कादा करे उसमें मांक्षिक गेरके पीवे तो रोगी रक्तातीसार को जीतके सुखी होय. ॥ १३ ॥

अपिच्च। चंदनामिति

चन्दनंविमलतण्डुलाम्बुनासंयुतंमधु युतंसितायुतम् । तृट्विखंडनमसृग्विखंडनं खंडनंप्रचुरदाहमेहयोः ॥ १४ ॥

विमलतण्डुलाम्बुनाविमलानांनिर्मलानांतण्डुलानांशालिषष्ठिकादिधान्यसाराणामम्बुनातोयेन संयुतंयुक्तंचन्दनं घृष्टंश्वेतंमलयजम्. तच्चमधुयुतंसितायुतञ्च माक्षिकशर्करामिः संमिलितंपीतंसत्. तृड्विखण्डनं तृषस्तृष्णाया विखंडनम् निराकरणकरंभवती. पुनरसृग्विखंडनं रक्तातीसार नाशनञ्च. पुनः प्रचुरदाहमेहयोः प्रचुरौप्राज्यौ यौदाहमेहौ गात्रसंतापप्रमेहौ तयोःखंडनंभञ्जनं भवतीत्यर्थः। यथोक्तम्। पीतम्मधुसिता युक्तं चंदनं तंदुलाम्बुना। रक्तातिसारजिद्रक्तपित्त

तृड्दाहमेहनुदिति ॥

## भाषाटीका

अच्छेतंदुलोंकेनिर्मलधोवनमेंश्वेतचंदनकोघिसेंऔर उसीजलमें मधुऔरशक्करमिलायपीवेंतोप्यासऔररक्तातीसारऔरशरीरकोजलनतथाप्रमेहइनरोगोंकोखंडनहोय ॥ १४ ॥ कुक्षीति

कुक्षिशूलामशूलघ्नम्बिबंधास्त्राति-
सारजित् सेवेतसगुडंबिल्वंबिल्व
तुल्यपयोधरे १५

हेबिल्वतुल्यपयोधरे॰ बिल्वेनश्रीफलेनतुल्यौसमौपयोधरौस्तनौयस्यास्तत्संबोधने। कुक्षिशूलाद्यामयवान्पुरुषः कुक्षिशूलामशूलघ्नं कुक्षिशूलं कुक्षावुदरे यद्वोदरस्यवामे दक्षिणे वा भागे शूलव्यथा। आमशूलम्आटोपहृल्लासवमीगुरुत्वंस्तैमित्यमानाहकफप्रसेकैः। कफस्यालिङ्गेनसमानालिङ्गं सामोद्भवंशूलमुदाहरन्तीतिलक्षणलक्षितम्। कुक्षिशूलञ्च आमशूलञ्चतकुक्षिशूलामशूले॰ हन्तीतिकुक्षिशूलामशूलघ्नस्तम्। पुनः विविधास्त्रातिसारजित्। विविधाबहुप्रकारोयोरक्तातिसारस्तञ्जयाति। यद्वा। विबन्धास्त्रातिसारजिदितिपाठः तत्रविबंधोमूत्राद्यवरोधः अस्त्रातिसारश्चतौजयाति स्ताद्दशंसगुडं — गुडसहितंबिल्वसुस्विन्नंबालबिल्वगर्भंशीतंकृत्वासेवेत॰ तस्योपभोगंकुर्यात्। ततस्तेदनोदकञ्चानुपिबेत्। यथोक्तम्। गुडेनभक्षयेविल्वंरक्तातीसारनाशनम्। आमशूलविबंधघ्नंकुक्षिरोगहरंपरमिति ॥

## भाषाटीका

कुक्षिशूलतथाआमशूलतथाविबंध वा सबप्रकार

के अतीसारवाला रोगी · छोटेबेलकोउवालके ठंडाक रके औरउसे पुरानेगुड में मिलाय के खायऔर उपरसेउ सीउवालेपानीको पीलेतो·सबरोगनष्ट होंय ॥ १५ ॥

असाध्यमतीसारिणं दृष्ट्वाभगवन्नामोच्चारणाभिधंपरमौषधमुपादि शति ।तृडिति

**तृट्श्वासकासज्वरशोफमूर्च्छाहिक्का न्नविद्वेषणवान्तिशूलैः युक्तोतिसारी स्मरतु प्रसह्य गोविन्ददामोदरमाधवे ति ॥ १६ ॥**

तृडादिभिर्दशोपद्रवैर्युक्तश्चेदतिसारी ·तदासप्रसह्य· सर्वोपद्रवं साद्धावलात्कारेण गोविन्ददामोदर माधवेति।स्मरतु सन्निहितकालत्वात् । यथोक्तम् । त्वामेवयाचेममदेहगेहे समागतेदण्डधरेकृतान्ते । आवर्तयेथामधुराक्षराणि गोविंद दामोदरमाधवेति ॥ अपिच ।शोथंशूलंज्वरंमूर्च्छांश्वासंकास मरोचकम् । छर्दितृष्णांचाहिक्कांच दृष्ट्वातीसारिणंत्यजेदिति॥ ह्यतिसारिणैतद्वश्यंत्याज्यम् ।स्नानावगाहनाभ्यङ्गं गुरुस्निग्धा दिभोजनम् ।व्यायाममग्निसन्तापमतीसारी विवर्जयेदिति ॥·:·

## भाषाटीका

प्यास·श्वास·खांसी·ज्वर·सूजन·मूर्छा·हिचकी·अन्नसे वैर·वमन औरशूलजोये १०उपद्रव अतीसारवालेकेहोंतो सबसेमनकूंहटाके केवल हेगोविंद हेदामोदर हे माधव इत्यादि स्वेष्टदेवता को स्मरणकरेतो सर्वत्र आनंदपावे १६

॥ इत्यतीसारप्रतीकारः ॥

अथग्रहणीप्रतीकारमाह । यवानीत्यादिना ॥·:·॥

**यवानीनागरोसीर धनिकातिविषाघनैः**

वल्लाबिल्वद्विपर्णीभिर्दीपनम्पाचनं-
स्मृतम्॥१७॥

यवान्यादिदशभिर्द्रव्यैर्ग्रहण्यां दीपनंरुचिकरं पाचनं दोषाणां पाचकंकषायंभवती। तत्रयवानी अजमोदस्र नागरंशुण्ठी उशीरमभयम् धानिकोधन्याकम् आतीविषादेव्याः घनोमुस्त वल्लावाव्यालकः बिल्वंश्रीफलद्वयमस्याःसस्यम् द्विपर्णीसालपर्णी प्राश्निपर्णीच। ग्रहण्यारुक्सुकम्। अग्न्याधिष्ठाननाडीच ग्रहणीतिनिगद्यते इति। ग्रहण्याः निदान सम्प्राप्ती यथा। अतीसारेनिवृत्तेपिमंदाग्नेरहिताशिनः। भूयःसन्दूषितोवान्हि ग्रहणीमपिदूषयेत॥एकैकशःसर्वशश्च दोषैरत्यर्थ मुर्छितैः। सा दुष्टावहुशोभुक्तमाममेवविमुञ्चति॥ पक्वंवासरुजंपूतिमुहुर्वद्धंमुहुर्द्रवम्। ग्रहणीरोगमाहुस्तमायुर्वेदविदोजनाः। इति॥

भाषाटीका

अजवायन· सोंठ· खस· धानियां· अतीस· मोथा· वड़े वाला· वेलगिरी· सालपाणी· और चकरोंल। जिसे गोड़ेय चाकुलिया कहते हैं· इनसब काकाढ़ा संग्रहणीवाले के दोषों का पकानेवाला और दीपन है॥ १७॥

अत्रकषायादीनाह। पुनर्नवेत्यादिभिः

पुनर्नवावासजवाणपुंखाविश्वाग्निप-
थ्याविरावेल्वावित्वैः। कृतःकषायःशमये
दशेषानुदुर्नामगुल्मग्रहणीविकारान्॥१८॥

अष्टाभिःपुनर्नवादिभिः कृतःकषायः पीतःसन् अशेषानाखिलान् दुर्नामाद्यामयान्समयेत शान्तिंनयेत तत्रदुर्नामअर्शःगुल्मः कोष्ठान्तर्ग्रंथिरूपःग्रहणीस्तेषांविकारान्। तत्रपुनर्नवावर्षाभूः वासजंमारिषम्· वाणपुङ्खाशरपुङ्खः विश्वाशुण्ठी· अग्निश्चि

त्रकः पथ्याहरीतकी चिरविल्वः करञ्जः विल्वमामाविल्वम्

### भाषाटीका

साठी मिर्च कोफरु जिसे सरफोंका भी कहते हैं सोंठ चीता हर्ड कसूवा और वेलगिरी इनका काढा पियेतो अर्शरोग वायगोला तथा संग्रहणी ये विकार नष्ट होय ॥ १८ ॥

शुण्ठीति

शुण्ठीछिन्नरुहाविषाजलधरैस्तुल्यैः कषायः कृतः मंदाग्नौ ग्रहणीगदेपि सतत सामानुबंधेहितः। शुंठीकल्ककृतघृत म्मापिवतः पांड्वामकासापहस्याद्वायोरनु लोमनंग्रहणिकावेगं जंगम्यते ॥ १९ ॥

तुल्यैः समांशैः शुण्ठ्यादि चतुर्भिः कृतो विहितः कषायः क्वाथः मन्दाग्नौ मन्दोऽतीक्ष्णोऽग्निर्यस्मिन् पुनः सामानुबंधे आमेनसह अनुबंधः सम्बंधो यस्य तस्मिन् तादृशे ग्रहणी गदे संग्रहणी रोगे हितोनुकूलः॥ तत्र शुंठी नागरम् छिन्नरुहा वत्सादनी विषाप्रातिविषा जलधरो मुस्ता ॥

### भाषाटीका

जो संग्रहणी रोगवाले को मंदाग्नि होय और आम केसाथ भी संबंध होयतो सोंठ गिलोय अतीस और मोथा इन चारों का काढा उस्को लाभकारक है ॥

अत्र घृतमप्याह। शुण्ठीति। शुंठीकल्ककृतं शुण्ठ्याः कल्कं चूर्णंतेन साधितंघृतंसर्पिः प्रापिवतः पानंकुर्वतः पुंसः पांड्वाम कासापहंस्यात् पाण्डुः रोगविशेषः आमोरोगविशेषः कासः क्षयथुः तेषांनाशनंस्यात्। वायोरपानवातस्य अनुलोमनंमधः प्रवर्तकंभवति। ग्रहणिकासंग्रहणीवेगेनसत्वरंजंगम्यते भ्रंशति

ग्रयेनगच्छति॥

## भाषाटीका

सोंठकेचूर्णको घी मेंडालके घीको पकाय के पीवें तो पांडुरोग· आमरोग· तथा खांसीकारोग· ये नष्ट होंय औ रअधोवायुकीप्रवृत्तिहोय· औरसंग्रहणी शीघ्र दूरहोय ११ पाठेति

पाठाविषाकुटजवृक्षफलत्वगब्द तिक्ता मदारसज नागरबिल्वचूर्णं । सक्षौद्रत- ण्डुलजलं ग्रहणीप्रवाह रक्तप्रवाहगुदरु क्गुदजेषु दद्यात् २०॥

वैद्यः ग्रहणीप्रिवाह रक्तप्रवाह गुदरुक् गुदजेषु रोगेषु पाठा दीनांचूर्णरजः सक्षौद्रतंडुलजलं माक्षिकेण सहितम् तंडुलानां व्रीहिसाराणां प्रक्षालितानां तोयंदद्यात् । पूर्वंचूर्णं मुखेनिक्षिप्य ततोमधुमिश्रितंतण्डुलो दिकंपिबेदित्यर्थः। तत्रग्रहणीसंग्रह णी· प्रवाह· प्रवाहिका· रक्तप्रवाहोरक्तातीसारः गुदरुकगुदपी ड़ा· गुदजोऽर्शतेषु । तत्रपाठाविषा· कुटजवृक्षस्य फलमिन्द्रयवः सस्यत्वक्· अब्दोमुस्ता· तिक्ताकटुकी· मदाधातकी· रसजंरसांज नम्· नागरम्· बिल्वम्·

## भाषाटीका

संग्रहणी, ग्रहणी, रक्तातीसार, गुदाकीपीड़ा, तथा अर्श· इन रोगों में· पाठा· अतीस· इंद्रजौ· कुटजकीछाल· मोथा· क टुकी· धायकेफूल· रसौत · सोंठ· औरबेलागिरी· इनदशों के चूरनको फांकके ऊपरसे धोयेतंदुलों के जल में सहत मिलायके पीवें तो येसबरोग नष्ट होंय और रोगी सुखीहोइ २

अथचन्द्रकलाभिधञ्चूर्णमाह । तुल्यांशमिति

तुल्यांशसकलं किरातकटुका मुस्तेन्द्रज

त्र्यूषणंभागस्त्वंद्रकलामितःकुटजतोभा-
गद्वयंचित्रकात्। चूर्णंचन्द्रकलाभिधंगुड-
पयोयुक्तंचपाण्डुज्वरातीसारारुचिकामला
ग्रहणिकागुल्मप्रमेहापहं २१

अत्रकिराततिक्तकामुस्तेन्द्रजत्र्यूषणसकलंतुल्यांशंग्राह्यम्‌ ·
कुटजतःचंद्रकलामितःषोडशोभागोग्राह्यःचित्रकात्भागद्वयं-
ग्राह्यम्‌।एतेषांचूर्णंचंद्रकलाभिधंनामभवति·तच्चगुडपयोयुक्तं
द्विगुणमिश्रेनशीतलाम्बुनापीतंसत्‌·पाण्डुज्वरातीसारारुचि-
कामलाग्रहणिकागुल्मप्रमेहापहंभवतीत्यन्वयः॥

## भाषाटीका

चिरायता·कुटकी·मोथा·इन्द्रजौ·सोंठ·मिर्च·पीप
ल·इनकूओंको बराबर२ ले· कुटजो इन्द्रजौ कावृक्षउ
सकी छालका सोल्हवांभाग ले· और चीतेके दोभाग ले
केपीसके चंद्रकलानामचूर्णबनावे· औरइससे दूना पु
रानागुड पानीमेंघोरले· चूर्णकोफंकीलेकेऊपरसेइस्को
पीलेंतो·पांडुरोग·ज्वर·अतीसार·अरुचि·कामला·ग्रहणी
·वायगोला·और प्रमेह· येरोगनष्टहोंय रोगीसुखीहोय २१

चूर्णांतरमाह।क्षारद्वन्द्वेत्यादिना।

क्षारद्वन्द्वपटोत्रिकत्रिकटुकैरग्न्याजमो
दानलैःकृष्णामूलकहिंगुजीरमिशामि-
स्तुल्यांशैर्विधेयरजः।पीतंकोष्णजलेनका
लपयसातक्रेणवात्योपघातंहृतंसतगु
ल्मगुदांकुरग्रहणिषुप्रायःप्रियम्प्रेय-
सि॥२२॥

क्षारद्वन्द्वंक्षारयोःसर्जिकायावक्षारयोर्द्वन्द्वम्‌।पटोत्रि

कात्रियाणांसङ्घः संख्यायाः संज्ञासंघसूत्राध्ययनेष्विति कन्। पटूनां विड्ऌचकसैंधवानां लवणानां त्रिकम्। त्रिकटुकं त्रयाणां कटुकानां मरिच शुण्ठी पिप्पलीनां समाहारः। एतेषामितरेतरयोगः तैः। चव्यं चविकाच अजमोदाच अनलश्चित्रकश्चतैः। कृष्णामूलकं पिप्पलीमूलञ्च हिङ्गु च जीरश्चमिशिः शतपुष्पा चताभिः। एतैः पञ्चदशभिस्तुल्यैः रजश्चूर्णं विधेयं कर्तव्यम्। तच्च हृतस्सुगुल्म गुदांकुरग्रहणीषु हृद्रोगेसुन्मान्द्ये गुल्मे गुदकुरे अर्शसि ग्रहण्यांच कोष्णजलेन ईषदुष्णेन पानीयेन यद्वा कोलपयसा स्वल्पबदरीक्वथितजलेन अथवा तक्रेण सहपीतं सत् हे प्रेयसि हे प्रियतमे अन्यौषधादन्यस्माद्भेषजात् प्राचोबाहुल्येन प्रियसुखकरं भवतीत्यर्थः॥

## भाषाटीका

सज्जी जवाखार खारीनोन कालानोन सेंधानोन सोंठ मिर्च पीपल चव्य अजमोद चीता पीपलामूल हींग जीरा और सोंफ इन सबको समान २ लेके चूरन बनाले उसे सोल गरम पानीके साथ अथवा तक्रके साथ पीवे तो हृद्रोग क्षुधाकी मन्दता वायगोला अर्शरोग और संग्रहणी ये सब रोग नष्ट होंय॥ २२ ॥

अन्यदप्याह। द्विक्षारेति

द्विक्षारषट्कटुपटुत्रजहिंगुदीप्यैः स्यात्सा
म्लुगवदरंकरसेनयुक्तं। श्लेष्मानिलग्र
हणिकागुदजप्रशस्तं लोकत्रयेकमातदी
पनपाचनतलम॥२३॥

द्वौचतौक्षारौच द्विक्षारौ सर्जिकायवक्षारौ षट्कटु षडूपणम्। तद्यथा। पंचकोलं समरिचं षडूषणमुदाहृतमिति। पटु-

ग्रजः लवणपंचकम्। तद्यथा। सैंधवंरुचकंचैव विडंसामुद्रकंगड मिति। हिङ्गुरमठम्। दीप्योयवानी। एतेषांचूर्णंकार्यम्· तच्चसार लुंगबदरे कस्सेनयुक्तं सारोऽम्लसारः अम्लवेतसइतियावत् लुङ्गो मातुलुंगः। बदरोवारिबदरं प्राचीनामलकमितियावत्। एषांम-ध्येतच्चूर्णमेकस्यापिरसेनभावितंसत्· श्लेष्मानिल ग्रहणिका गुदजे· श्लेष्मादीनां द्वन्द्वैक्यम्· कफवातसंग्रहण्यर्शस्सुप्रशस्तं यो ग्यम्। कथम्भूतंलोकत्रयैकम् त्रैलोक्यांमुख्यंपुनः अतिदीपनपा चने अतिशयदीपनेपाचनेच अलंसमर्थम्·

## भाषाटीका

सज्जी·जवाखार·पीपलामूल·पीपल·वच·चीता· सोंठ·मिर्च·औरसेंधानोंन·संचरनोंन·खारीनोंन·समुद्रनों न·हींग और अजवायन·इनसबको समानलेके चूर्णकरै और इनमें अमलवेत वा बिजौरा नीबू· अथवा पानीआंवले इनतीनोंमेंसे किसीएकके रसकीभावना देके बनायरखै इस अति दीपनऔरपाचनका सेवन कफऔरबादी·तथा संग्रहणी और अर्शरोग इनके दूर करदेनेमें बड़ीहीश्रेष्ठहै २३

चूर्णान्तरमाह। चूर्णमिति

**चूर्णंचित्रकचव्यश्रीविश्वभेषजनिर्मितं**
**तक्रेणसाहितंहन्ति ग्रहणींदुःखकारिणीम्**
**॥ २४ ॥**

चित्रकादिचतुर्भिर्निर्मितं चूर्णंतक्रेण दंडाहतेन सहितंसाद्धं सेवितंदुःखकारिणींहन्ति। तत्रचित्रकचव्येप्रसिद्धे· श्रीर्बिल्वम्· विश्वभेषजंशुंठी·

## भाषाटीका

चीता, बच बेलगिरी सोंठ, चारोंका चूर्ण तक्रके संगपीनेसे-दुःखदाइनी संग्रहणीनष्ट होती है·रोगी सुखी होता है २४

अन्यच्च। रुचिकेति

रुचिकाग्निमरीचानां चूर्णं तक्रेण सेवितं॥
ग्रहण्युदरगुल्मार्शःक्षुन्मांद्यप्लीहनाशनं॥ २५॥

रुचिकादित्रयाणां चूर्णं तक्रेण सार्द्धं सेवितं पीतं सत् ग्रहण्यादिरोगाणां नाशनं नाशकरं भवति। तत्र रुचकं सौवर्चलम्. अग्निश्चित्रकम्. मरिचं धर्मपत्तनम्। ग्रहणा प्रवाहिका उदरम् उदररोगः गुल्मः कोष्ठान्तर्ग्रन्थिरूपीरोगः अर्शो दुर्नाम. क्षुन्मांद्यं भोजनेच्छाया मन्दत्वम् प्लीहा गुल्मः वामकुक्षिस्थमांसखंड इति यावत्।

भाषाटीका

कालानोंन. चीता. और मिर्च इनके चूरनको तक्रके साथ पीनेसे. संग्रहणी. उदररोग. वायगोला. अर्श. क्षुधाकी मन्दता. और प्लीहा. ये सब रोग नष्ट होंय॥ २५॥

अथाज्यमाह। आज्यमिति

आज्यम्पयोधरजलेंद्रजबालबिल्वह्रीबेर मोचरसकल्कयुतम्बिपक्कं आमानुबंध सहितं रुधिरान्वितञ्च सद्यो निहन्ति गृहणीविकारम्॥ २६॥

पयोधरो मुस्ता. जलमुशीरम्. इन्द्रजः कुटजबीजम्. बालबिल्वं लघुबिल्वपेशी. ह्रीबेरमुदीच्यम्. मोचरसः शाल्मली निर्यासः एतेषां कल्केन युतं युक्तमेतादृशं विपक्कमाज्यं घृतं पीतं सत् हे ग्रहणि आमानुबंधसहितं सामं रुधिरान्वितञ्च ग्रहणीविकारं सद्यः शीघ्रं निहन्तीत्यर्थः॥

भाषाटीका

मोथा. खस. इन्द्रजौ. छोटेलफलकी मींगी. सुगंधबाला

औरमोचरस-इनकाचूर्णगेरके घृतको पक्ककरै औरउस घृतकाकुछादिन सेवनकरेतो रुधिर आंव के साथ जोसं ग्रहणी ताकूं शीघ्रही नष्ट करै औररोगी सुखीहोय २६

॥अतीसारिणे तदवश्यंवर्जनीयम्।स्नानावगाहनाभ्यङ्गान्गुरुस्निग्धादिभोजनम्।व्यायामाग्निसंतापमतीसारीविवर्जयादिति।खें नसमुद्धृतजलेन अवगाहनं नद्यादाविति भेदः॥५॥

# इतिश्रीवैद्यजीवने अतिसारग्रहणीप्रतीकारो द्वितीयोविलासः२

इतिश्रीकुलावधूत श्रीपरमहंस परिव्राजकाचार्यश्रीमद्धरिहरानन्द नाथभारतीशिष्यश्रीमदवधूत श्रीसुखानन्दनाथाविरचितायांसुखानंदयालोलिम्बदीपिकायामतीसारग्रहणीप्रतीकारनामोद्वितीयविलासस्यप्रकाशार्थः२॥

अथकासश्वासादीनांचिकित्सामाह॥अतःपरमिति॥७॥

## अतःपरंकोमलवाणिकासश्वासप्रतीकं समुदीरयामः निहन्तिकासंगुरुपंचमूलीकृतःकषायश्चपलासहायः१

हे कोमलवाणि कोमलामनोहरा वाणीयस्यास्तत्संबोधने। अतः परमतीसारादि कथनोत्तरम् कासश्वासयोःप्रतीकारं चिकित्सामुदीरयामः कथयामः। तत्रचपला सहायः पिप्पली चूर्णसंयुक्तो गुरुपंचमूलीकृतः कषायः गुरुपंचमूलीबृहत्पंचमूलीपूर्वोक्तातयारचितः क्वाथः पीतः सन् कासंहवयुं निहंतीत्यर्थः।यथोक्तम्।पञ्चमूलीकृतःक्वाथः पिप्पलीचूर्णसंयुतः। रसान्नमश्नतोनित्यंवातकासमुदस्यतीति॥

## भाषाटीका

वेलगिरी स्योनाक गंभारी पाडल औरअरणी इन

का काढ़ा पीना कासरोग का नाशक है ॥ १ ॥

कासश्वासे गुटिकामाह। घनेति

घनविश्वशिवागुडजा गुटिका त्रिदिनं वदनाम्बुजमध्यधृता। हरति श्वसनं कसनं ललने ललने वा हिमरुद्दयापगता ॥ २ ॥

घनो मुस्ता· विश्वं शुण्ठी · शिवा हरीतकी · केनाचित् प्रमाणेन मिलितानां चूर्णितानामेतेषां द्विगुणेन गुडेन जनिता वटिका निस्तली· कार्या। सा चा त्रिदिनं दिनत्रयं वदनाम्बुजस्य मुखकमलस्य मध्येऽभ्यन्तरे धारिता सती · हे ललने हे कामिनि· श्वसनं श्वासरोगम् कसनं कासरोगं च हरति निवारयति। काकामिव· हृदयोपगता हृदः संलग्ना ललनाहिममिव शिशिरं यथा·

भाषाटीका

मोथा·सोंठ· और हरीतकी· इन तीनों को पीसके सबसे दुगने पुराने गुड में रलायके कडवेरी के बेर के समान गोली बांधले· और उसे तीन दिन लग के मुख में रखा करै तो श्वास और कास ये दोनों रोग नष्ट हों ॥ २ ॥

अत्रावलेहमाह। आज्यस्येति

आजस्य मूत्रस्य शतं पलानां शतं पलानां च कलिद्रुमस्य। पक्वं समध्वाऽशनि हन्ति कासं श्वासं च तद्वत् सबलं बलासं ३

अजाया इदमाजम् · अजासम्बन्धि· मूत्रं प्रस्राव स्तस्य पलानां शतं शतपलपरिमितम्· कलिद्रुमो विभीतकः सोऽपि शतपलपरिमितो ग्राह्यः। एतदुभयं मधुना सह पक्वं अवलेहीभूतम वलीढं सत् आशु त्वरितं सकलं कासं श्वासं बलासं च नितरां हन्ति सबलमिति त्रयाणां विशेषणम्। उक्तञ्च। प्र-

स्थविभीतकानामस्थिविना·साधयेदजामूत्रे।अयमवलेहो लीढोमधुसाहितः श्वासकासघ्न इति-

भाषाटीका

८तोलेका १पल·इसप्रमाणसे १०० तोलेभर बकरी-कामूत्र·और १००पलबहेडे इनको मधुकेसाथपकावे जबपकके चाटनेयोग्य गाढाहोय् तबउतारके पात्रमें धररारवे औरप्रातःकालमें चाटा करै·तो·खासी·स्वास और कफयेरोग बलवानभीहोगये होंयतोभीजातेरहे३

अथार्द्रकपाकमाह।आर्द्रादिति

आर्द्रादर्द्धतुलागुडादपितथाद्धांशंचकुस्तु-बरीदीप्यायोजरणात्रिजातजलदाद्दार्व्यं पचेद्युक्तितः। लेहोरत्नकलेतवेवकाथि तः प्राणप्रियायामयाकासार्शोज्वरपीन-सश्वयथुरुग्गुल्मक्षयध्वंसनः॥ ४॥

आर्द्रत् आर्द्रकरसात्·अर्द्धतुलापंचाशत् पलानि·तथा तेन प्रकारेण·गुडादपिइक्षुसाराच्च पञ्चाशत् पलानि। कुस्तुब रीधान्याकम् दीप्यायवानी·अयोलोहचूर्णम् जरणाकृष्णजी रकः त्रिजातं समानित्वगेलापत्राणि·जलदो मुस्ताएम्योष्टभ्यश्च ·अर्द्धांशम्·यथासर्वेषा मष्टानां मानंपंचविंशति पलानिभवति· तथेत्यर्द्धांशस्यव्याख्या। एतत्सर्वंदार्व्यांगोजिव्हयासह-युक्तितोलेहवत्पचेत् पाकंकुर्यात्।हेरत्नकलेरत्नेषु कला-अंशमात्रंयस्याः स· तत्संबोधने रत्नकलालोलिम्बराज प त्नी इतिप्रसिद्धम्। कासार्शो ज्वर पीनसश्व यथुरुग गुल्मक्षयध्व सनः कासः क्षवथुः अर्शोदुर्नामकम्·ज्वरोमहागदः पीनसो-नामारोगः प्रतिस्यायः श्वयथुरुक शोथरोगः गुल्मोवातगुल्मः

क्षयः काशरोग विशेषोयक्ष्मा। एतेषां रोगाणांध्वसनोनाशकर्ता स्तादृशो यमवलेहो। जिह्वयाभोजनस्य प्राणप्रियायां प्राणेभ्यो पिप्रीतिविषयायास्तवैव संबंधे मया कथितः उक्तः। अन्येभ्यो गोपितः॥

## भाषाटीका

५० पल अद्रक का रस· और इतना ही गुड़ लेना· और धानियां· अजवायन· लोहचूर· कालाजीरा ·दालचीनी ·इलायची· तेजपात· और मोथा· इन आठों के आठ भाग अलग अलग इसभांति लेने। जिसमें सब के मिलकर इकट्ठे २५ पल होजाय। इनसब को गोजिया के साथ एसे यत्न से पकावे जिसमें अवलेह बनजाय· इसे प्रभातमें चाटा करें तो· स्वांसी· अर्श· ज्वर· पीनस· सूजन का रोग· वायगोला· औरराजयक्ष्मा जिसे छई कहते हैं- आदि- सब रोग नष्ट होंय और रोगी रोग से मुक्त होय॥ ४॥

अत्राचिंतामणिनामचूर्णमाह। रास्नेति-॥

रास्नावलापूद्मकदेवदारुफलत्रिकंत्र्यू
षणवेल्लचूर्णं। चिंतामणिःक्षौद्रघृतोपप
न्नश्श्वासञ्च कासञ्चनिराकरोति५

रास्नाद्येकादशभिश्चिन्तामणिनामचूर्णंभवति। तच्चासमांशाभ्यांक्षौद्रघृताभ्यामुपपन्नं युक्तंलीढंसत् श्वासंकासञ्चनिराकरोतिदूरीकरोतीत्यर्थः। तत्ररास्नाभुजङ्गाक्षी·बलावाट्यालकः· पद्मकं पद्मकाष्ठम्· देवदारु·फलत्रिकंत्रिफला· त्र्यूषणं त्रिकटु· त्र्यूषणंत्रिकटु· वेल्लंविडङ्गम्। भजतोबेषरूपत्वंतुल्याशे मधुसर्पिषी·

## भाषाटीका

जैतकेबीज·चाड़ि याले कीजड़·पदमकाठ·देवदारु·त्रिफला·सोंठ·मिर्च·पीपल·औरबिडंग·इनको समानलेके पीसके चूरनबनावै इस चूर्णको विषमम धुघृत केसाथ-खायाकरे तोश्वासरोग और कासरोग दोनों दूरहोजाय ५

अथक्वाथमाह। वासेति

वासाहरिद्रामगधागुडूचीभार्गीघनानागरधावनीनाम्। क्वाथेनमारीचरजोन्वितेन श्वासःशमंयातिनकस्यपुंसः ६

मारीचरजोन्वितेन मरिचचूर्णयुक्तेन वासाद्यष्टानां क्वाथेनपीतेन कस्य पुंसः श्वासः समंनयाति अपितु सर्वस्यैव शमं यातीत्यर्थः॥ अत्रवासादयः स्पष्टार्थाः। घनारुद्रजटा॥

भाषाटीका

वांसा·हल्दी·पीपल·गिलोय·भारंगी·रुद्रजटा·सोंठ·कटेलीकीजड़ इन आठों का काढ़ा करके उस्में पिसी मिर्च गेरके पान करें तो स्वास का रोग अवश्य शान्तिहोय ६

लवंगादिगुटिकामाह। तुल्याइति

तुल्यालवंगमरिचाक्षफलत्वचःस्युःसर्वैःसमोनिगदितःखदिरस्यसारः बब्बूरवृक्षजकषाययुतञ्चचूर्णं कासान्निहन्तिगुटिकाघटिकाष्टकान्ते॥७॥

लवङ्गमरिचाक्षफलत्वचः। लवङ्गं देवकुसुमम् मरिचं-वेल्लजम्·अक्षफलत्वक् अक्षः कलिद्रुमस्तस्य फलंतस्यत्वक् वल्कलम्। एतेलवङ्गादयस्तुल्याः स्युः समांशाः अपेक्षिताः। खादिरस्यसारो दन्तधावनस्यानिर्यासः खादिरः सर्वैः समःस मानोनिगदितउक्तः। एतेषांचूर्णं बब्बूरवृक्षजकषाययुतम्·व

बूरदक्षः कफान्तकतरुः तस्यत्वचः कषायेणयुतंयुक्तंकृत्वा वटिका कर्त्री सागुटिकास्वादिता घटिका ष्ट कान्तेअष्टघटिकापरिमिति कालानन्तरंकासान् पञ्चप्रकारान् निहान्तिनाशयती। तेयथा। पंचकासाः स्मृतावातपित्तश्लेष्मक्षतक्षयैः। क्षयायोपेक्षिताः सर्वेबालिनश्चोत्तरोत्तरामिति ॥

## भाषाटीका

लौंग मिर्च और बहेडे का बक्कल इनतीनोंकेसमानभागलेकेकूटपीसके इकट्ठे कर लेने इनसबकेसमान खैरसार कोभी कूट पीसकेमिलालेना पीछेबबूरकी छालको औटाय के उसका पानी उन पिसीदवाओं में डालकर उसकी गोली बनाले सो उसगोली खाने से आठ घडीके पीछे सबभांत की खांसी नष्टहोकर रोगीमनुष्य प्रसन्न होजाताहै॥ ७ ॥

अथलोलिम्मराजः स्वकान्तायांवैयाकरणीत्वंद्योतयन्शुंठीक्वाथसाह रूपमिति

रूपंकीदृक्कमलवदनेनुः परेसौगिरेः स्यं तसम्बुद्धेः कामधुरवचनेकानिर्वाजस्य षष्ठी। कस्यक्वाथश्वसनशमनोवल्लभे नेतिपष्टावैद्यद्द्याद्दुतमिदमदात्सोत्तरनागरस्य॥८॥

हे कमलवदने कमलमिववदनंयस्यास्तत्संबोधने-भातामरसास्ये नुर्नृशब्दस्य सोपरेप्रथमैकवचने परतः कीदृक्रूपं भवतीतिशेषः। पुनः हेमधुवचने भाभाधुर्यविशिष्टभाषिणि गिरेर्गीरिस्य सम्बुद्धेः सम्बोधनेप्रथमैक वचनं कार्कैप्रकारः तथाहिर्निर्वीजस्य रेफस्य षष्ठीविभक्तिः का श्वसन-

शमनः शमयतीति शमनः श्वसनस्य श्वासरोगस्य शमनो नाशकर्ता एतादृशः क्वाथः कस्यभवतीतीत्यं वल्लभेन कान्तेन पृष्टाकृतप्रश्ना विद्वद्वन्द्याविद्वद्भिर्दक्षैर्वन्द्यावन्दनीयासारत्नकला इदं नागरस्येतिउत्तरं प्रतिवाक्यं द्रुततूर्णमदात्। तत्र ना· अगरस्य नागरस्य· इत्यन्तर्लापिकायां व्यस्तजातिरूपमुत्तरं दत्तवतीत्यर्थः॥ यथाह। वातंनिदलयन कफंकवलयन् उन्मूलयन्पीनसं· दृष्टिंनिर्मलयन् प्रभां· प्रबलयन् हृद्रोगमुत्सारयन्। निःशेषं जठरामयं प्रशमयन्नुद्दीपयन् पावकं· कासश्वासनिरास साधनमसौ विश्वाकषायः कृतः॥

## भाषाटीका

सोंठ का काढ़ा पीने से श्वासरोग का नाश होताहै ८

क्वाथान्तरमाह। अयीति

## अयिरत्नकलेनीलनलिनच्छदवीक्षणे सिंहीकषायःसकणः कासश्वासकरः क्षणात्॥९॥

अयीत्यामंत्रणे हे रत्नकले हे नीलनलिनच्छदवीक्षणे नीलंनीलवर्णविशिष्टं यन्नलिन मरविन्दं तस्ययोछदः पत्रंतद्वद्वीक्षणे विशिष्टेनेत्रे यस्यास्तस्याः संबोधने। सकणः पिप्पलीचूर्णसंयुक्तः सिंहीकषायः कण्टकार्य्याः क्वाथः सपीतः क्षणादशपलपरमिति कालांतं कासश्वासकरः कासरोगस्य ग्रासं कवलं करोत्येतादृशी भवती॥ यथोक्तम्॥ कण्टकारीकृतः काथः सकणः सर्वकासहोति॥

## भाषाटीका

पीपलोंके चूर्णको कटेलीकीजड़ केवक्कल मेंमिलाके दोनोका काढ़ा करके पीवेतो शीघ्रही कासरोग जातारहै ९

अन्नचूर्णमाह। पिप्पलीति

पिप्पलीपिप्पलीमूलविभीतकमहौष धैः मधुनासेवितैःकासःप्रशाम्यति-कुतूहलम् ॥ १० ॥

मधुनामाक्षिकेण सह सेवितैःउपभुक्तैः पिपल्यादिचतुर्णां चूर्णैः कासः कास रोगः शाम्यतिशान्तोभवतीति कुतूहलंस्वल्पापायेन महद्गुणंभवतीत्यद्भुतम्.

भाषाटीका

पीपल. पीपलामूल. बहेड़ेकाबक्कल. औरसोंठ. तीनोंकेचूर्णकूंमाक्षिककेसाथ चाटनेसे स्वांसीरोगशान्त होजाताहै १०

अवलेहांतरमाह। कटुतैलेनेति

कटुतैलेनसंयुक्तो गुडोयावन्नसेवितः॥ तावन्नश्यतिकिंश्वासः पीयूषमधुराधरे ॥ ११ ॥

हे पीयूषमधुराधरे पीयूषमसृतमिव मधुरोमिष्टोः धर ओष्ठौ यस्यास्तत् सम्बोधने. यावत् यावत्काल पर्यन्तम्. कटुतैलेन सर्षपस्नेहेन. संयुक्तःसम्यक् प्रकारेण मिलितो गुडः इक्षुपाकोनसेवितोनोउपभुक्तः. तावततत्काल पर्यन्तम्. किमितिप्रश्ने श्वासः श्वासरोगोनश्यति. अपितुन् नश्यतीत्यर्थः॥ यथोक्तम्। गुडंकटुकतैलेन मिश्रयित्वा समंलिहेत्। त्रिसप्ताहःप्रयोगेणश्वासनिर्मूलतां नयेदिति॥

भाषाटीका

जबलग सरसोंके तेलमें पुराने गुड़ को भलीभांति मिलाकेचाटने कासेवन स्वासरोगी वाला नहीं करेगा तबतक क्या उसका रोग नष्ट होताहै"? कभीनहीं होता ॥ ११ ॥

कारणस्येति

रावणस्यसुताहन्यान् सुरबवारिजधारितः श्वसनं कसनंचापि तामिवानिलनन्दनः १२

मुखवारिजधारितः मुखवारिजे वदनारविन्दमध्ये धारितो-धृतो रावणस्य सुतोऽसः अक्षशब्दे नात्र वहेडुकफलम्। श्वसन श्वासरोगम्, कसनं कासरोगञ्चापिहन्यात् हिंस्यात्। कः कमिव, अनिलनन्दनो मारुतिः तामिवअक्षं रावणमिव। कपीशमक्षहन्तारं वन्दे लंका भयंकर मित्यतिप्रसिद्धेः॥

## भाषाटीका

बहेडेकाबक्कलमुखमेंरखनेसे स्वास और खांसी नष्टहोंय॥१२॥

अयीति।

अयिप्राणप्रियेजातिफललोहितलोचने
शुण्ठीभार्गीकृतःक्वाथः कसनश्वसना-
हिराट्॥१३॥

अयीति मृदुसंलापे। भोप्राणप्रिये प्राणात् ह्न्मारुतात्तप्रिया प्रीतिविषया, तत्संबोधने। हेजातिफललोहितलोचने जातेः काम्पिल्लवृक्षस्य फलं सस्यंतद्वल्लोहिते रक्तवर्णेलोचनेनेत्रे यस्यास्तत्संबोधने। जातिःसामान्यगोत्रयो। मालत्यामामलक्याञ्च-चुल्ल्यांकाम्पिल्लजन्मनोः। जातीफले छन्दसि चेतिहेमचन्द्रः॥ शुण्ठीभार्गीकृतःक्वाथः शुण्ठीभार्गीभ्यां प्रसिद्धाभ्यां रचितः कषायः सपीतः सन् कसन श्वसनाहिराट कसनं कासः श्वसनं श्वासरोगः तयोराहिराट् सर्पराजो भवतीतिशेषः॥

## भाषाटीका

सोंठ और भारंगी का काढ़ा कास और स्वास दोनों को नाशे है

अन्नचूर्णमाह। संयुक्त इति

संयुक्तोगुडसर्पिर्भ्यां चूर्णस्त्विकट्टसम्भवः
निहन्तितरसास्वासं कासानिव सवाहार
॥ १४ ॥

त्रिकटु सम्भवः त्र्यूषण जनितश्चूर्णो गुड़सर्पिर्भ्यां संयुक्तः कन्व्यः समाश्रितः सन्तरसा झटितिश्वासंश्वासरोगं निहन्ति। दृष्टान्तः। हरिर्नारायण मतां नित्यानित्य वस्तुविवेकादि साधन सम्पन्नानां मुमुक्षूणां साधूनांत्रासान् मृषाज्ञानजनितान् संसार हेतून्दरानिव॥

## भाषाटीका

सोंठ मिर्च और पीपल, तीनों दवाओं को बराबर २ ले के चूर्ण करै और चूर्ण के समान गुड़, और दुगना घृत ले फिर उस चूर्ण को गुड़ और घी दोनों में मिलाय चाट करै तो स्वास रोग शीघ्रही नष्ट होय। जैसे भगवान् साधू स्वधर्माचरणशीलभक्तन के डरों को शीघ्र नष्ट करैहैं तैसे १४

श्वासकासप्रतीकारांतरमाह। शृंगवेररसइति

शृंगवेररसो येन मधुनासह सेवितः। श्वास कासभयं तस्य नकदा चित्कृशोदरि॥
॥ १५ ॥

मधुनासह माक्षिकेण सार्द्धं शृङ्गवेररसः शृङ्गमिववेरम् शरीरमस्येति शृङ्गवेर मार्द्रकम् तस्यरसोजलम् येन मनुजेन सेवितः उपभुक्तः भोः कृशोदरि हेतनुमध्ये तस्यमानवस्य श्वास कासयोर्भयं कदाचित् कस्मिंश्चिदपि कालेन भवतीति शेषः।

## भाषाटीका

मधु के साथ अद्रक के रस का जिस मनुष्य ने सेवन किया उसको श्वास कास का डर कभी नहीं हुवा॥१५॥

अथकथायान्तरमाह। पुलोमजेत्यादिना

पुलोमजावल्लभसूनु पत्नीतातात्मसंशेखर वाहनस्य। सौंदर्यदूरीकृतरामरा

मेकषायकः कासममीरसर्पः ॥१६

भोसौन्दर्य दूरीकृतरामरामे सौन्दर्येण सुन्दरत्वेन दूरीकृतान् इदन्तरेण त्यक्ता रामस्य दा स रथेः रा मासीतायया सा तत्संबोधने । पुलोमजावल्लभसूनुपत्नी तातात्मभू शेखरवाहनस्य पुलोमजा शची तस्या वल्लभः पतिरिन्द्रः तस्यसूनुः पुत्रोऽर्जुनः तस्य पत्नी द्रौपदी तस्यास्तातो जनको द्रुपदः तस्यआत्मभूः पुत्रः शिखंडी शिखंडोबर्हचूड़योरितिमेदिनिकरः । शिखंडश्चूडास्यास्तीति शिखंडी सर्पः सएव शेखरः शिखाचिन्हस्तमात्स्यैयस्यस- शिवः तस्यवाहनं यानं वृषः वृषशब्दनात्रवासकः वृषोधर्मेव लीवर्दे शृङ्ग्यांपुराशिभेदयोः । श्रेष्ठेस्यादुत्तरस्थश्च वासमुषिक- शक्रले । तथावास्तुस्थानभेदेपुमानेषु प्रकीर्तित इतिमेदिनिकोषः । तस्यकषायः क्राथः कासममीर सर्पः कास एवसमीरः पवनः तस्य सर्पः पवनाशनः । अत्रानुक्तस्यापि मधुनः प्रक्षेपः कर्त्तव्यः तथाचार दर्शनात् ॥

## भाषाटीका

बांसे का काढ़ा खांसी का नाश करनेवालाहै ॥१६॥

फलत्रयमिति

फलत्रयं छिन्नरुहा सचित्रा रास्नाक्रिमघ्नः सकटुत्रयञ्च । चूर्णं समांशं सितया- समेतं कासं जयेन्नात्र विचारणीयं ॥१८

फलत्रयं फलानां पथ्याधात्रीविभीतानां त्रयम् छिन्नरुह्रा अमृता कथम्भूता छिन्नरुहा सचित्रा चित्रेण चित्रकेण सहिता रास्ना क्रमिघ्नो विडङ्ग कटुत्रयं त्रिकटु । एतेषां समांशं समानभागं चूर्णं सितया शर्करया समेतं संयुक्तं भक्षितं कासंजयेत् अत्र किमपिनाविचारणीयम् । चूर्णाद्द्विगुणा सितायोज्या ॥ यथोक्तम् ।

चूर्णगुडः समोदेयः शर्कराद्विगुणामतेति ॥

## भाषाटीका

त्रिफला· गिलोय· चीता· रायसन· वायविडंग· सोंठ· मिर्च· और पीपल ये दशों वस्तु समान २ भाग लेके· पीसके इनका चूर्ण करना· और सब चूर्ण के समान उसमें शक्कर गेरनी· इसके सेवनसे खांसी अवश्यजाय कुछशंकानहीं ॥७

इतिकासश्वासप्रतीकारः ॥

अथामवातप्रतीकाराय एरण्डस्नेह युक्त दशमूलशुंठीक्वाथमा ह। दशमूलेति ॥

दशमूलकषायमिश्रितंवा ललनेवि- श्वकषाय मिश्रितंवा प्रपिवेत्क- टिकुक्षि वास्तिशूले ध्रुवमेरण्डजमेकमे वतैलम् ॥ ८ ॥

अस्यसम्प्राप्तिर्यथा। विरुद्धाहारचेष्टस्यमन्दाग्नेर्नि श्चलस्यच। स्निग्धंभुक्तवतोह्यन्नं व्यायामंकुर्वतस्तथा ॥ वायुनांप्रेरितोह्यामः श्लेष्मस्थानं प्रधावति तेनात्यर्थमपक्कोसौधमनी भिः प्रपद्यते ॥ वातपित्तकफैर्भूयो दूषितः सोन्नजोरसः। स्रोतांस्य भिष्यन्दयातिनानावर्णोऽति पिच्छिलः ॥ जनयत्याग्नि दौर्बल्यं हृदयस्यच गौरवम्। व्याधिनामाश्रयोह्येष आमसंज्ञोतिदारुणः ॥ युगपत्कुपितावेतौ त्रिकसंधिप्रवेशकौ। स्तब्धञ्च कुरुतेगात्र मामवातः सउच्यते ॥ तस्यरूपम्। अङ्गमर्दोऽरुचिस्तृष्णाप्यालस्यंगौरवंज्वरः। अपाकः शूनताङ्गानामामवातस्य लक्षणम् ॥ सात्रिधा। पित्तात् सदाह रागञ्च सशूलंपवनानुगम्। स्तिमितं गुरुकण्डूञ्च कफजुष्टं तमादिशेदितिनिदानम् ॥ विरुद्धाहारचेष्टस्याविरुद्धाहारः क्षीर मत्स्यादिः। विरुद्धाचेष्टाभुक्त्वा व्यायामादि

तदुक्तस्य। निश्चलस्यानिर्व्यापारस्य। स्निग्धंभुक्तवतोह्यन्नं व्या
यामं कुर्वत इति मिलितोहेतुः। श्लेष्मस्थानमामाशयसन्ध्यादि।
तेनश्लेष्मस्थान गतेनअत्यर्थमपक्वः पित्तस्थान गमनतुपक्वोऽभ
विष्यादित्यभिप्रायः। असौआमः धमनीभिः प्रपद्यतेधमनीमार्गे
स्खलति। भूयोदूषितोऽतिशयेनदूषितः। सोऽन्नजोरसः आमःस्रो
तास्यभिष्यन्दयति ससतस्यरस वह्वासिरावरोधं कृत्वास्रोतांसिगु
रूणिकरोत। नानावर्णः वातादिजनितवर्णभेदान्नानावर्ण॥ आम
स्वरूपन्तु। अजीर्णाद्योरसोजातः संचितोहि क्रमेणवै। आमसंज्ञांस
लभते शिरोगात्ररुजाकरः। अजीर्णात् भुक्तादजीर्णात्॥ अस्य लक्ष
णान्तराणि गौरवाभियानीलिखितानि। अस्याचिकित्सार्थं दशमू
लेत्यादिश्लोकः। हेललने अहोकामिनि ललिते इच्छातिरन्तुम्
ललईप्यासाम्। चूरादीनावाणिजितिपक्षेल्युर्युज्वा। आमकृते
कटिकुक्षिवस्ति शूले। दषमूलकषायमिश्रितं दशमूलस्य। वि
ल्वस्योनागरंभारीपाटलागणिकारिका। शालपर्णीप्रश्निपर्णी
बृहतीद्वयगोक्षुरम्॥ उभाभ्यांपञ्चमूलाभ्यां दशमूलमुदाहृतंसि
स्युक्तस्यकषायेण क्वाथेन। मिश्रितंमिलितमथवा विश्वकष
येन शुण्ठीनियासेनमिश्रितंयुक्तं ध्रुवंनिश्चितम्। एरण्डजमुरु
बूक सम्भूत मेकंकेवलं तैलं स्नेहमेवप्रपिवेत्। नथाहिचक्रपा-
णिदत्तः। दशमूलीकषायेण विवेद्वानागरम्भसा। कुक्षिवस्तिक
टिशूले तैलमेरण्डसम्भवमिति।

## भाषाटीका

जो आमवात से कमर कूख और वस्ति स्थान में -
शूल अर्थात् बडी पीडा होयतो दशमूलकेकाढे में वासोंठ
के काढे में मिलायके केवल एक अरंड के तेलको ही -
पान करै तो सुखी होय॥ १९॥

कषायान्तरमाह । रास्नेति

रास्नामृतानागरदेवदारुपंचांघ्रियुग्मेन्द्रयवैःकषायः रुबूकतैलेन समन्वितोयं हर्त्ताभवेदामसमीरणस्य ॥ १९ ॥

रास्नादिपंचदशभिः कृतः कषायः रुबूकतैलेन समन्वितः-एरण्डस्नेहेन सहसेवितः आमसमीरणस्यामवातस्य हर्त्तानाशको भवेत् ॥ रास्नादय उक्तार्थाः ॥

## भाषाटीका

रायसनकेबीज् गिलोय सोंठ तथापूर्वोक्तदशमूल और इन्द्रजौ इनकरकेबाजो क्वाथ उसको अरंडकेतेलकेसाथ मिलाकेपीनेसे आमवात का रोग नष्ट होय ॥ १९ ॥

विश्वागुडूच्योः क्वाथमाह । विलासिनीति ॥

विलासिनी विलासेन विलासिहृदयं यथा तथा गुडूची विश्वेन हरेदामसमीरणं ॥ २० ॥

विश्वेनशुण्ठ्या सह गुडूचीक्वाथः आमसमीरणमामवातं हरेत । कार्किकेनेवेति हृष्टांतमाह । विलासिनी विलासिनीयुक्ता पूर्वोक्तास्त्री विलासिहृदयं विलासिनोभोगिनः कामीजनस्यचित्तं विलासेन हावप्रभेदेन यथाहरेत् नयेत्यर्थः ॥ दाधिमत्स्यगुडक्षीरं पोतकीं माषपिष्टकम् । वर्जयेदामवातार्त्तो दुष्टनीरमनूपजम्

## भाषाटीका

गिलोय और सोंठ का काढ़ा पीनेसे आमवात नष्ट होता है २०

इत्यामवातः

अथ चक्षुरोगस्य चिकित्सामाह

सम्यगिति

सम्यक्स्विन्नाश्छगजलरसे काननोत्थाः कुलत्थाश्चैलेबद्धाः परिहततुषाः पोढसीमन्तिनीभिः सूक्ष्मापिष्टाः पटुरसनिशाचूर्णपूर्णाः सुपायाचक्षुः क्षिप्ताः सकलरुधिरं संहरति त्र्यहेण ॥ २१ ॥

काननोत्थाः वनोत्पन्नाः कुलत्थाः इक प्रसादाः चैलेवस्त्रे बद्धाः कीलिता ः पुनश्च दोलायंत्रेण छगलजरसे अजामूत्रे सम्यक् स्विन्नाः शोभनप्रकारेण पाचिताः । पुनः पोढसीमन्तिनीभिर्निपुणस्त्रीभिः परिहततुषाः निस्तुषीकृताः पुनस्ताभिरेव सूक्ष्मं यथा तथा पिष्टा चूर्णीकृताः पुनश्च पटुरस निशाचूर्णपूर्णाः पटुलवणं सैंधवम् लवणं नेत्रयोर्द्वेषि प्रायशः सैंधवादिनेत्युक्तेः । रसो गंध रसो बोल मितियावत् निशा हरिद्रा एतासां चूर्णेन रजसा पूर्णाः पूरिताः युक्ताः कार्याः । ते च चतुरस्मादि छ्यादक्षपायां निशायां चक्षुः क्षिप्ताः नेत्रन्यस्ताः त्र्यहेण दिवस त्रयेण सकलरुधिरं समस्तरक्तकृता भिष्यंदं संहरंति नाशयंती ॥

## भाषाटीका

बन कलथीन को उत्तम स्वच्छ वस्त्र की पोटली में बांधके उस पोटली को डोलायंत्र की विधि से अधर लटकायके बकरी के मूत्र में अच्छे प्रकार उबाले जब उबल के गल जाय तब उनके तुष को दूर करके चतुर स्त्री उन्हें का जल के समान सूक्ष्म पीसे पीछे उस पिसी पिट्ठी में सेंधा लून बोल और हल्दी इनके सूक्ष्म पिसे चूरन को उस में रलाय के चतुर नारी रात को नेत्रों में आंज दे तो तीन दिन को ऐसी क्रिया नेत्र के सारे बिगड़े रुधिर और सम्पूर्ण विकारों को हर लेगी ॥ २१ ॥

लोलम्बराजोति

लोलिम्मराजकविना वनिताऽवतंसोशि
ग्रोरमुष्य कथितोस्ति किमुपयोगः ॥
एतस्य पल्लवरसात्समधोः किमन्यत्
दृग्व्याधिमात्रहरणे महिलाग्रगण्ये ॥
॥ २२ ॥

हे वनितावतंसे वनितानां शिरोभूषणे· लोलिम्मराजकवि नामग्रंथकर्त्रा अमुष्याशिग्रोः शोभांजनस्य किमु किमर्थमुपयोग-आचरणं कथितोभिहितोऽस्तीति चोदितिपूर्वः। हे महिलाग्रग ण्ये महिलासु यौवनमदमत्तासु वामा सु अग्रेन पुरस्तात् प्राधान्ये न गणितुं योग्ये· दृग्व्याधिमात्रहरणे दृशोर्व्याधेर्नेत्ररोगास्तन मात्रस्य हरणे नाशकरणे· एतस्याशिग्रोः पल्लवरसात् पत्रस्वरसात् ·समधोर्माक्षिकयुक्तात्· अन्यद्भेषजान्तरं किमस्ति· नास्तीत्य र्थः॥

## भाषाटीका।

सहजनेके पत्तों को मलके उनका रस निचोडके उ समें सहत मिलाके उसको नेत्रों में आजे तो नेत्रों की सब-व्याधि नष्ट होय॥ २२ ॥

कुवलयनयनेइति ॥*

कुवलयनयनेर्जुनं कफोब्धेः सहासितया
शकानिराचरीकरोति प्रियकरामवका-
मिनीनिर्योदालघुकुचशालिनिवक्षसिप्र
युक्तम्॥२३॥

हे कुवलयनयने कुवलयामिंदीवरं तद्दलवन्नीले नेत्रे यस्यास्तत्संबोधने। सितया सह अब्धेः कफो डिण्डीरः· अर्ज्जुनं चक्षुरोग विशेषं यथोक्तम्। एकोयः शशरुधिरोपमस्तु बिन्दुः शुक्लस्थो भवती तदर्जुनं वदन्तीति। तमाशकल्यारिति निराचरी

करोति दूरीकरोति। तत्रदृष्टान्तः। काकाभिपनवोढा नववधूर्नूतनाविवाहिता कामिनीमिन सातिशय कामवती लघुकुचशालिनि लघू ह्रस्वौ यौ कुचौ स्तनौ ताभ्यां शोभायमाने वक्षसि उरसि प्रियकर मिव प्रियस्य पत्युः करं हस्तं यथा दूरीकरोतितद्वेत्यर्थः॥

## भाषाटीका

नेत्रकी सफेदी में जो ससे के रुधिर सरीखी कील लस्यक बूंद सोहोय उसे अर्जुन कहैहैं सो अर्जुनसारके साथ समुद्रफेन को घिसके आंजे तो दूरहोजाय॥ २३॥

इतीति

**इति निगदितमार्ये नेत्ररोगातुराणां निशि समधुघृता या सेव्यमाना सुखाय अयि नवशिशुलीलालोलदृष्टे त्वमस्या जनयसि वत कस्माद्वैपरीत्यं यत्तु॥ २४॥**

हे आर्ये हे सत्कुलजे नेत्ररोगा तुराणां सम्बन्धे समधुघृता मधुघृताभ्यां माक्षिकगव्याज्याभ्यां सहिता अस्या त्रिफला निशि रात्रौ सेव्यमाना कृतसेवना भक्षिता सती सुखाय शर्मणे भवतीति निगदितं वैद्यैरितिशेषः। त्रिफलामधुसर्पिभ्यां निशिनेत्रबलायचेति वाग्भटः अतीत्याभि सुखीकरणे हे नवशिशुलीलालोलदृष्टे नवीनव्योयः शिशुः शावकोऽतिबालकस्तस्य या लीला करचरणादिचालनस्वरूपा केलिस्तद्वल्लोला अस्थिरा दृष्टिर्लोचनं यस्यास्तत्संबोधने। त्वमपि अस्या अष्टाय रतु वतइति खेदे नेत्ररोगा तुराणां निशि कस्मात् हेतोर्वैपरीत्यं विपरीतभावं जनयसि। यातो नेत्ररोगिणो मैथुनं सर्वथा निषिद्धम्। मधुघृताभ्यामित्यत्र मधुनो मद्यस्याप्यनिष्टकरत्वाद्वैपरीत्यम्॥

## भाषाटीका

रातमें मधु और घी के साथ त्रिफला का सेवन नेत्रों के रोगी को सुख के अर्थ है ॥ २४ ॥

रात्र्यन्धतो पायमाह। निराकरोतीति

निराकरोति नक्तांध्यं सगोमय रसा कणा। यथारतेन रमणीरमणस्य महाबलं ॥२५॥

सगोमयरसा कणा गोमयरसेन सह घृष्टा पिप्पलीनक्तंध्यं रात्र्यन्धतां निराकरोति दूरीकरोति। तत्रोदाहरणं यथेति। यथा रमणी रमयति नरमिति रमणी विशेषाङ्गना रसेन सुरतेन रमणस्य रमयति कामिनीमिति रमणः पतिस्तस्य महाबलं महत् सामर्थ्यं निराकरोति तथेत्यर्थः॥

## भाषाटीका

गायके गोबर के रस में पीपल को घिसके आंजें तो रतोंधा दूर होजाय ॥ २५ ॥

श्यामेइति

श्यामे श्यामे प्रियश्यामे श्यामा बोधित मानसे। शक्रं शमयति क्षिप्रं माक्षिकं माक्षिकान्वितम् ॥२६॥

हे श्यामे षोडशवर्षवयस्का अप्रसूताङ्गना श्यामा तस्याः संबोधने। पुनः हे अश्यामे श्यामवर्णा श्यामा न श्यामा अश्यामा गौरवर्णा तत्संबोधने। पुनश्च हे प्रिये श्यामे प्रियो भर्त्ता श्यामो वर्णतः कृष्णो यस्याः यद्वा प्रिया हृद्या हृता प्रिया श्यामा कालिका यस्यास्तत्संबोधने। हे श्यामा बोधित मानसे श्यामा अप्रसूताङ्गना षोडशवार्षिकी सखी तया बोधितं सम्यक् ज्ञापितं मानसं मनो यस्यास्तस्याः सम्बोधने माक्षिकान्वितं मधुयुतं

माक्षिकं स्वर्णमाक्षिकं घृष्ट्वा नेत्रे न्यस्तं सत् शुक्लशुक्राभिधं तारकापिण्डकाभिधं नेत्ररोगं क्षिप्रं शमयति नाशयति ॥

## भाषाटीका

मधु के साथ सोनामाखी को घिस के नेत्रमें आंजे तौ थोड़े दिनका जो नेत्र में फूला होय तो शीघ्र ही कट जायगा २६

इति नेत्ररोगप्रतीकारः ॥

अथ कामलाप्रतीकारमाह । त्रिफलेति

### त्रिफलावृषभूनिम्बनिम्बतिक्तामृताकृतः क्वाथो मधुयुतः पीतः कामलापाण्डुरोगजित् २७

तत्र पाण्डुरोगभेदस्य कामलाया निदानपूर्विकां सम्प्राप्तिमाह भावमिश्रः स्वप्रकाशे । पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते । तस्यापित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते । पित्तं कर्तृ । दग्ध्वा सन्दूष्य । रोगाय कामलारूपाय पाण्डुरोगिण एवातिशयितापित्तलसेवया कामला भवतीति नायं नियमः किन्तु कामला-स्वतंत्रापि भवति · यथा राजयक्ष्मा कासादुपेक्षिताद्भवति · नायं नियमः किन्तु राजयक्ष्मा स्वतंत्रोपि भवति तद्वदेषापि ॥ कामलायालक्षणमप्याह सएव । हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः । पीतरक्तशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्षितः ॥ हारिद्रं हारिद्रावर्णम् । पीतरक्तशकृन्मूत्रः । पीतेरक्ते वा शकृन्मूत्रे यस्य सः । भेकवर्णः दर्दुरकवर्ण इति ॥ त्रिफलाद्यष्टद्रव्यैः कृतो रचितः क्वाथः कषायः मधुयुतो माक्षिकसहितः पीतः सन् कामलापाण्डुरोगजित् कामलकृतोयः पाण्डुरोगः तस्य नाशको भवती । यद्वा । कामलारोगं पाण्डुरोगञ्च जयतीत्यर्थः । यथाह चक्रपाणिदत्तः । फलत्रिको

सुताबासातिक्ताभूनिंबानिम्बजः।क्वाथः सक्षौद्रयुतोहन्यात् पाण्डु रोगसकामलामिति॥

## भाषाटीका

त्रिफला·वासा·चिरायता·नीब·कुटकी·औरगिलाय इनका काढाबनायके ठंडा करके उस्में सहद मिलायके पीनेसेपाण्डुरोग कामलारोग केसाथ नष्टहोय॥ २७॥

देवदालीति

देवदालीफलरसोनस्यतोहन्तिकाम-
लां संदेहानात्र संफुल्लनीलोत्पल
विलोचने॥२८॥

देवदालीफलरसः देवदाल्याः कण्टफलायाः फलम् तस्य रसोवस्त्रनिष्पीडितजलम् · सनस्यतः नासिकायांप्रदा-नात· कामलांस्वनाम्नाख्यातंरोगंहन्तिनाशयति हेसंफुल्लनीलोत्पलविलोचने· सम्फुल्लंविकासितंयन्नीलोत्पलमिंदीवरं तद्वद्विलोचनेनेत्रे यस्यास्तत्सम्बोधने। अत्रास्मिन्नुपचारे सं देहो वापरस्त्वयानकार्य्य इतिशेषः॥

## भाषाटीका

घर्घरबेल औरसोनैया इत्यादि भाषा प्रसिद्ध जो देव दाली उस्के फलको नस्यलेनसे कामलारोगनष्टहोयहै इस्में संदेहनहीं २८॥ देवदालीकेफलकेजलकीनासलें·

अत्राञ्जनमाह। गिरिस्थादीति

गिरिस्थारात्रिधात्रीणामंजनंकामलापहं
इदंनाहिभवत्तेमिथ्याशपथस्तुतवाग्रतः॥

गिरिस्थंगैरिकम्· रात्रिर्हरिद्रा· धात्र्यामलकी एषांचूर्णस्याञ्जनं कामलापहंभवति। हे अङ्गे···इदमञ्जनं

मिथ्यानैवभवेदत्र तवसपय:शयनंमयाक्रियते इतिशेषः ॥

भाषाटीका

गेरू हल्दी और आमले इनतीनों को बहुतमहीनपीसके नेत्रों में अंजे तो कामलारोग नष्ट होजाय ॥ २९ ॥

अयीति

अयिमनोज्ञकुंडले स्फुरन्मुखेन्दुमंडले गवांपयःसनागरं निहन्तिकामलाभरं ॥ ३० ॥

अयि मनोज्ञ कुंडले मनोज्ञे शोभने कुंडले कर्णवेष्टने यस्यास्तत्संबोधने। हे स्फुरन्मुखेन्दु मंडले इन्दोर्मंडलं वहिर्वेष्टनम् मुखमिंदु मंडलमिवेति मुखेन्दु मंडलं स्फुरद्दीप्यमानं मुखेन्दु मंडलं यस्यास्तत्संबोधने गवाम्पयोगोमूत्रं शंठ्यासहपीतंसत् कामलाभरंकामलातिशयं निहंति भाषाटीका

गिलोसोंठगोमूत्र मेंमिलाकेपीनेसे कामलारोगनष्टहोताहै॥३०

इतिकामलाप्रतीकारः॥

अथयोनिशूलप्रतीकारमाह। पिचुमंदरसेनेति॥

पिचुमंदरसेनमिश्रितैः पिचुमंदानिलशत्रुबीजकैः घटितावटिकाभगान्तरेभगशूलप्रशमायधारयेत् ॥ ३१ ॥

पिचुमन्दोनिम्बः अनिलशत्रुरेरण्डः तयोःपिष्टैःबीजकैः बीजैः पिचुमर्द्दरसेनामिश्रितैः पिचुमर्द्दस्य निम्बस्य रसेन स्वरसेन-मिश्रितैःसम्मर्द्यैकीकृतैस्तैर्घटितारचिता वटिकागुटिका भगशूल प्रशमाय भगेजन्मवर्त्मनिशूलं रोगविशेषस्तस्य प्रशमायप्रशमतायै भगान्तरे संसारमार्गस्यान्त धारयेत स्थापयेत ॥

भाषाटीका

निंबोली और रेंडी इनको कूटके सूक्ष्म करके पीसलें पी
छे नींबू का रस गेरके मांडले जब मांडते २ उनका एक जी
होजाय तब आंवले प्रमान गोलियां बनालें सो गोली
योनी में जो शूलरोग होय तो उसकी शांति के लिये भगके म
ध्य धारण करै तो योनीशूल नष्ट होय स्त्री सुखपावे ॥ ३१ ॥

तरुणीति

तरुण्युत्तरणीमूलं छागीसर्पिः सनागरं।
शिवशस्त्राभिधांबाधां योनिस्थां हन्तिस
त्वरं ३२॥

हे तरुणी हे युवति उत्तरणी मूल मिन्द्रवारुणी मूलं सना
गरं शुण्ठ्या सह अजाज्येन युक्तं कार्यम् तस्य लेपात् योनि
स्थां शिव शस्त्राभि धांशिवस्य शस्त्रं शूलं तदेवभिदा नामयस्याः
सातांबाधांव्यथां सत्वरं तूर्णं हन्ति नाशयाति ॥

भाषाटीका

इन्द्रायण की जड़ और सोंठ इनको पीसके सूक्ष्म चूर्ण
करले उसमें बकरी का घी मिलायके घोटके लेप बनाय
ले इसका योनी में लेप करने से भगके शूल की पीड़ा जाय
। अथप्रसूतानां योषितां स्तन्यशोधनाय कषायमाह । गोपीति ॥

गोपीहरीतकीदारुकिरातमूर्वातिक्तामृता
विश्वघनेन्द्रजानां क्वाथोयमुक्तो
द्गलोचनानां दुष्टस्य दुग्धस्यविशोधना
यै ॥ ३३ ॥

गोपीशारिवा हरीतकीपाठा दारुदेवदारु किरातोभूनिम्बः ।
मूर्वापीलुपर्णीलता तिक्ताकटुकी अमृतागुडूची विश्वशुण्ठी
घनोमुस्तकः इन्द्रजः इन्द्रयवः एते सांसौषधीनामयं क्वाथोमृग

लोचनानामेणीनयनानां दुष्टस्य दोषयुक्तस्य · दुग्धस्य बालजी
वनस्य · विशोधनाय निर्दोषीकरणाय · उक्तोभिहितः॥

## भाषाटीका

सौंऊ जिसे गौडिये अनन्तमूल कहते हैं · पाठापटाडू
जिसे गौडिये आकनादी कहते हैं · देवदारु · चिरायता · मुरहरी
· कुटकी · गिलोय · सोंठ · मोथा और इन्द्रजौ इन दश औषधों
का काढा पीनेसे स्त्री का जो दूध दुष्ट होजाय सो शुद्ध होय।
जिस दूधके पीनेसे बालकको रोग होय वही दुष्ट दूध है ३३

अथप्रदरप्रतीकारमाह। कटङ्कटेरीति॥

**कटंकटेरी रसजाब्द वासा भूनिम्ब भल्ली**
**तिलजः कषायः क्षौद्रान्वितश्चञ्चल**
**लोचनानां नानाविधानि प्रदराणि हन्या**
**त्॥ ३४॥**

कटंकेरी दारुहरिद्रा · रसजं रसांजनम् · अब्दो मुस्तकः
वासा अटरूषः · भूनिम्बश्चिरातिक्तः · भल्ली भल्लातकः · तिलो होम
ध्यानम् · कटंकटेर्यादिभ्य उत्पन्नः कषायः क्वाथः क्षौद्रान्वितो-
माक्षिकयुक्तः पीतः सन् · चंचललोचनानां तरलेक्षणानां नारी-
णां नानाविधानि चतुःप्रकाराणि प्रदराणि · हन्यात्। चतुर्विधमुक्तं
भावमिश्रे · नस्य प्रकाशे। तं श्लेष्मपित्तानिलसन्निपातैश्चतुः प्र
कारं प्रवदन्ति वृद्धा इति॥

## भाषाटीका

दारुहल्दी · रसौत · मोथा · अडूसा · चिरायता · भिलावा ·
और तिल · इनके काढ़े को मधु मिलाय के रोगी पीवे तो सब
प्रकार के प्रदर नष्ट होय जांय॥ ३४ ॥

कुवलयदलनेत्रेइति॥

कुवलयदलनेत्रे तण्डुलीयस्य मूलं रस
ञ्जमपि समांशम्भेषजं द्वन्द्वमेतत् ॥ हि
मकरसुखि युक्तं तंडुलाम्भोमधुभ्यां प्रद
रदरमुदीर्णं सुन्दरीणां निहन्ति ॥ ३५ ॥

हे कुवलयदलनेत्रे कुवलयस्येन्दीवरस्य दलं पत्रं तद्वन्नेत्रे य स्यास्तत्संबोधने। हे हिमकरसुखि-हिमाः शीतलाः कराः किरणा यस्य एतादृशो हिमांशुः तद्वन्मुखमास्यं यस्यास्तत्संबोधने। तंडुलीयस्य अल्पमारिषस्य-मूलं बुध्नः रसाञ्जमपि रसाञ्जनञ्च एतद्द्वन्द्वं मिथुनं समांशं तुल्यभागं भेषजमौषधम्-तण्डुलाम्भोमधुभ्यां तंडुलानां धान्यसाराणां क्षालितजलं मधुना क्षौद्रञ्च ताभ्यां युक्तं पीतं सत्-सुन्दरीणां स्त्रीणां मुदीर्णं महत्तरं प्रदरं तं प्रदरस्य सृगदरस्य दरं साध्वसं निहन्ति ॥ तदुक्तं भावप्रकाशे। रसाञ्जनं तंडुलकस्य मूलं क्षौद्रान्वितं तंडुलतोयपीतम्। असृग्दरं सर्वभवं निहन्तीति॥

## भाषाटीका

चौलाई की जड़ और रसौत इन दोनो को समान भाग लेके कूट पीसके तंदुलों के पानी और मधु के साथ पीने से प्रदर का दर्द केसाही होय सो नष्ट होय ॥ ३५ ॥

अथ स्त्रीणां रजः प्रवृत्त्यवरोधस्य कुलटानां भ्रूणपातनस्य चो पायमाह। मूलमिति

मूलं गवाक्ष्यं स्मरमन्दिरस्थं सुष्ठावरो
धस्य वधं करोति अभर्तृकाणां व्य-
भिचारिणीनां योगोय-मेवद्रुतगर्भपाते
॥ ३६ ॥

स्मरमन्दिरस्थं मुपस्थे स्थापितं गवाक्ष्या विशालाया-

मूलंबघ्नः पुष्पावरोधस्य रजस्तिरोधानस्य वधंकरोतिपुष्पप्रदं भवतीत्यर्थः॥ पुनः अभर्तृकाणांविश्रवस्तानांव्यभिचारिणीनां कुलटानांचद्भुतगर्भपाते शीघ्रभ्रूणस्याधःपातनेचायमेवयोग उपायोस्तीतिशेषः। अभर्तृकपदात् कुमारीप्रोषितपातिकयोर पिग्रहणम्॥

## भाषाटीका

जोस्त्री अवस्था में रजस्वला होनेसे बैठरहै सोस्त्री इन्द्रायणकी जड़को भगमेंरक्खें तौ रजस्वला फेरहोनेलगेजाय- और जो विधवा वाकन्या वाजिस्का भर्ता विदेशगयाहोय ऐसी स्त्री व्यभिचार से गर्भवती होजाय- फेरवह गर्भ गिराय भ्रूणहत्या भी करना चाहै॰ उस पापिनी को गर्भगिराने का भी यही उपायहै॥ ३६ ॥

अथैकेन श्लोकेनांतरवत्न्याः सुखप्रसवमनयोर्भेषजमाह। मध्वाज्येति

**मध्वाज्ययष्टीमधुलुंगमूलंनिपीयसूते सुसुखीसुखेन सुतण्डुलाम्भःसितधान्यकल्कपानाद्धामिर्गच्छातिगार्भिणी नाम॥ ३७॥**

सुसुखीशोभनंसुखंयस्याः सा। स्वाङ्गादितिङीप् मधुमाक्षिकम्॰ आज्यंसर्पिः यष्टीमधुयष्टी॰ लुङ्गमूलंबीजपूरस्य जटाएतेषां कल्क कृत्वातं निपीयपीत्वागार्भिणी सुखेनअक्लेशेन॰ सूतेप्रसूते। यथाहचक्रपाणिदत्तः। मातुलुङ्गस्यमूलानि मधूकंमधुसंयुतम। घृतेनसहपातव्यं सुखनारीप्रसूयतेइति॥ सुखप्रसवमंत्रोपिपठनीयः। सयथा। अस्तिगोदावरीतीरे जम्भलानामराक्षसी तस्यास्स्मरण मात्रेण विशल्यागार्भिणी भवेदिति। अत्रमध्वाज्ये विषमेमाह्ये अन्यतसमम्। अथवागार्भिणानां सतंडुलांभः सितधान्यकल्कपानात्॰ शोभनतंडुलजलेन सहासितधान्ययाः शर्करा

धन्याकयोः कल्कस्य पानात् पीतेः वामिर्वान्तिं गच्छति ॥

भाषाटीका

गर्भवतीस्त्री पुत्रकेजन्मने केसमय जोमधु-घी-सु-लहटी औरबिजौरे कीजड़ इनको कूटपीसमिलायके पीलेय तोसुखसे सोवे और जोगर्भवालीको छर्दआने-लगरहीहोय तोस्वेततंदुलों के धोवनमेंस्वेत सक्कर-औरपिसाहुवाधानियांमिलायके पिलायदेतौ वमन-कारोगचलाजाय और नारी का चित्त अच्छा होजाय ३७

धन्याब्देति

धन्याब्दांऽबुदयाऽरलुऽमृतविषव
लाऽरेणु दुस्पर्शशीतं गार्भिण्याः सूतिकायाः
आपिरुधिररुगामातिसार ज्वरघ्नम् ॥
मुस्तारङ्गीविषाणास्मृशमयतिरजःसे-
वितंक्षौद्रयुक्तं बालानांवान्तिकासज्वर
मातिविषजंक्षौद्रयुक्तंरजोवा ३८॥

धन्याधान्याकम् अब्दोमुस्ता अम्बुदयमुशीरह्रीबेरं अरलुः स्योनाकः अमृतागुडूची विषाअतिविषा बलावाट्यालकः रेणुःपर्पटः दुस्पर्शोयासः शीतंचन्दनम् एतेषां समाहारेण कृतंक्काथितं जलंगार्भिण्याः स्त्रियः। पुनः सूतिकायानवप्रसूताया आपियोषायारुधिररुगामातिसारज्वरघ्नम् रुधिररुक्च रक्तामातिसारश्चज्वरश्चतान् हन्त्येतादृशम्। एतदुक्तम्चक्रपाणिदत्तमिश्रेण। ह्रीबेरारलुरक्तचंदनबला धन्याकवत्सादनी मुस्तोशीरयवास पर्पटाविषाक्काथंपिवेद्गर्भिणी। नानावर्णरुजातिसारकगदे गर्भाश्रितेवाज्वरे योगोयंमुनिभिःपुरानिगदितःसूत्यामयेपूजितइति॥

## भाषाटीका

जोगर्भवतीस्त्रीकेअथवा नयीप्रसूतास्त्रीकेरुधिर काबिकार वारक्तातिसार किंवाज्वरहोय वा येसव रोगहोय· तो धानियां· मोथा· खस· सुगंधवाला· सोनाक गिलोय· अतीस· बाडियाला· पित्तपापडा· जवासा· औररक्त चंदन इन एकादश औषधोंका काढ़ा पीवैतौ उसस्त्रीके येसब रोगनष्ट होंय औरस्त्री को सुख होय·॥

मुस्ताशृंगी। विषाणांचूर्णीकृता नारजश्चूर्णं क्षौद्रयुक्तं मधु सहितमवलेह तयासेवितंसत्· बालानांस्त नंधयानां· बान्ति कासज्वरं प्रशमयाति वापक्षान्तरे क्षौद्रयुक्तमतिविषजंरजः प्रतिविषा चूर्णं सेवित ताहृशंभवाति। भावमिश्रस्तु। घनकृष्ण रुणा शृंगी चूर्णंक्षौद्रेणसंयुतम्। शिशोज्वरातिसारघ्नं कासंश्वासं वमिंहरेत्॥ अरुणाअतिविषा। चतुर्भद्रिका ज्वरातिसारेष्विति विशेषमाह॥

## भाषाटीका

जो दूधपीते बालकको· छर्दिवारखांसी और तप-आता होतो मोथा· काकडासींगी· औरअतीस इनके चूर्णको मधुमें मिलायके बालक को चटायदे तो उसके सबरोग नष्ट होजाय। अथवा अकेली अतीस के चूर्णको मधुमें मिलाय केचटावैतो भी रोग शान्तिहोजाय॥ ३८

शिशोरतिसारक्वाथमाह। कुमारातिसारइति

कुमारातिसारेकषायः समंगामदाता
रिवारोध्रजः क्षौद्रयुक्तः मदारोध्रवि
ल्वाब्दमांजिष्ठवालाकषायो बलेहोथ
वाक्षौद्रयुक्तः ३९

समंगामांजिष्ठामदाधातकी· सारिवागोपी· रोध्रोलोध्रः

एषांतुर्णांकषायः क्वाथः क्षौद्रयुक्तोमाक्षीक मिश्रितः कुमारा
तिसारेदेयः ॥उक्तञ्च॥ समङ्गाधातकीलोध्रसारिवाभिः सृतंजल
म्। दुर्द्धरेपिशिशोर्देयमतीसारे समाक्षिकमिति ॥

## भाषाटीका

जोबालकको अतीसार होयतो मंजीठ·धाईकेफूल
सारिवा और लोध इन चारों का काढा बनायकेउस्में मधु
मिलायके पिवायदे तो अतीसार बंद होजाय ॥

आपिचांसदाधातकी· रोध्रोलोध्रः बिल्वंबिल्वफलमामम्·
अब्दोमुस्ता· माञ्जिष्ठासमङ्गा·बालाह्रीबेरम्। मदादीनांकषायः
अथवा रुषामवलेहः। क्षौद्रेणयुक्तः कषायोऽवलेहो वाकुमा
रस्या तिसारेहितोभिहितः॥

## भाषाटीका

धाईकेफूल·लोध·बेलागिरी·मोथा·मंजीठ·और सुगं
धबाला·इनपांचों का काढा वा चटनी पिलाने वा चटने
से बालक का अतीसार दूर होताहै ॥ ३९ ॥

प्रसंगादत्रबालरोगाणांनिदानादिकंलिख्यते॥+॥

धात्र्यास्तुगुरुभिर्भोज्यैर्विषमैर्दोषजैस्तथा। दोषादेहेप्रकुप्यंति
ततःस्तन्यं प्रदुष्यति ॥ मिथ्याहारविहारिण्या दुष्टावातादयःस्त्रि
याः। दूषयन्तिपयस्तेन जायंतेव्याधयः शिशोः॥ वातदुष्टंशिशुः
स्तन्यंपिबन्वातगदातुरः। क्षामस्वरः कृशांङ्गः स्याद्बद्धविण्मूत्रमा
रुतः॥१॥ स्विन्नोभिन्नमलोबालः कामलापित्तरोगवान्। तृष्णा
लुरुष्णसर्वाङ्गः पित्तदुष्टंपयापिबन् ॥२॥ श्लेष्मदुष्टंपिबन्क्षीरं
लालुःश्लेष्मरोगवान्। निद्रार्दितोजडःशूनवक्त्रोछर्दनःशिशुः॥३
॥ ज्वराद्याव्याधयःसर्वेकथितामहतान्तये। बालानामपिते
तद्वदोद्धव्यामिषगुत्तमैरिति॥

इतिश्रीदिवाकरसूनुलोलिम्बराजविरचितेवैद्यजीव
नेतृतीयोविलासः ३॥

इतिश्रीकुलावधूत श्रीपरमहंस परिव्राजकाचार्य्य श्री
मद्धरिहरानन्दनाथभारतीशिष्य वाल्मावधूतश्रीसुखानन्दना
थविरचितायां सुखानन्दीन्यां लोलिम्बदीपिकायां तृतीय-
विलासस्य प्रकाशार्थः ॥

श्रीगुरवेनमः।

अथक्षयादिगदानांचिकित्सांश्रोतुंरत्नकलोपक्रमते। विद्वल्लमे
ति॥ -विद्वल्ललामलोलिम्बनृपतेर्वाग्विला
सतः तृप्तिर्नजायतेस्वामिन्पुनःकि
ञ्चिन्नरूपय॥ १ ॥

विदन्तीतिविद्वांसः आयुर्वेदज्ञाः तेषु ललामं प्रधानभूतंयोऽसौ
लोलिम्बनृपतिस्तस्य लोलिम्बराजस्य वाग्वाणी वाग्विलासो
लीलातस्याः श्रवणात् तृप्तिः अलंप्रत्ययः श्रवणेच्छानिवृत्तिर्नजा
यते अतः हेस्वामिन् पुनः किंचिन्निरूपय कथय॥ १ ॥

लोलिम्बराजआह। क्षयेति

क्षयोत्पत्तिविनाशायसिंहास्यःसेव्यतां
सदा वहूनामस्याविश्वासोजातःक
मललोचने॥ २॥

हेकमललोचने हेपद्मेक्षणे क्षयोत्पत्तिविनाशायक्ष
यस्यराजयक्ष्मणो नृपामयस्य उत्पत्तेः प्रादुर्भावस्तस्यविनाशाय-
अदर्शनाय सिंहास्योवैद्यमाता सदासेव्यतां सर्वदासेवनीयः।
सदाशब्देन अन्योपायेष्वपिनाशकस्य त्यागोनकार्यइत्याशेप्र
उक्तञ्च। वासायांविद्यमानायामाशायांजीवितस्यच। रक्तपित्त
क्षयीकासीकिमर्थमवसीदतीति॥ अस्यसेवनस्यबहुतराणां

विश्वासोनिश्चयोजातउत्पन्नः॥

भाषाटीका

क्षयीरोगकेविनाशार्थ बांसेका सेवन सबने उत्तम कहा है २॥

अयिसुन्दरीति।

अयिसुन्दरिसुन्दराननेरुचिरापांगतरंग
लोचने नवनीतमधूपलाशनादुडु
राजोपिभवेत्क्षयः क्षयः ३

अयिसुन्दरि हे सुन्दरि। हे सुन्दरानने सुन्दरं शोभनमाननं यस्यास्तत्संबोधने। हे रुचिरापाङ्गतरङ्गलोचने रुचिरौशोभनौ योअपाङ्गौ नेत्रान्तौतयोस्तरंगालहर्यौयस्मिंस्ताहशे लोचनेनेत्रे यस्यास्तत्संबोधने। नवनीतमक्कताख्यं संयोगेनयोद्धृतंच मधु माक्षिकञ्च उपलाशर्कराचत्रयाणं। भक्षणाद्भक्षणात् उडुराजोपि उडुषु नक्षत्रेषु राजते राजृदीप्तौ किंप् तस्यापिनक्षत्रेश स्यापिक्षयो यक्ष्मरोगः क्षयोभवेत् नष्टो भवेत् ॥

भाषाटीका

क्षयीरोग के नष्ट करने के लिये नौनी और मधु तथा मिसी पत्थर तीनोंमिलाय सेवन करै तौ क्षयीरोग का क्षय होय ३॥

इतिक्षयप्रतीकारः।

अथव्रणोपचर्यामाह।अयीति

अयिकोमलकुन्तलावलीविलसन्-
मालतिकामनोहर त्रिफलाजनितः
कषायकः सहितोगुग्गुलुनाव्रणजयेत
॥ ४ ॥

अयीति मृदुलभाषणे सम्बोधनम्। हे कोमलकुन्तलावली विलसत्पल्लवमालिकामरे कोमलानां मृदुलानां कुन्तलानां

बालानां रोमावली पङ्क्तिः अलकपरम्परा वातया विलसन्ती। विलाससहिता यापल्लवैर्युक्ता मल्लिका पुष्पविशेषजातिर्वा तस्याः भसत्कच्छी यस्यास्तत्संबोधने। विलसन्मालतिकामनोहरे इतिपाठान्तरं वा गुग्गुलना सहितः कुंभोलूखलकेन युक्तास्त्रिफलाजनितः कषायकः व्रणरोगं जयेत्॥

## भाषाटीका

गुग्गुलकेसाथ त्रिफलाका काढ़ापीवैतो व्रणकूं जीतलै ४

॥ अथमेदःप्रतीकारः॥

मदनज्वरकारिनामधेये रसिके रत्नकले प्रभातकाले। शिशिराम्बु पिबन्मधु प्रयुक्तं गणनाथोपि भवेत्कलास्थिशेषः॥ ५॥

हेमदनज्वरकारिनामधेये मदनज्वरं कामज्वरं करोति तच्छीलं नामधेयं यस्यास्तत् संबोधनं। हे रसिके रसोरागः स्नेहोस्तियस्याः तत् तत्संबोधने। हेरत्नकले प्रभातकाले अरुर्मुखसमये मधुप्रयुक्तं माक्षिकसहितं। शिशिराम्बु सुशीतं पानीयंपिबन् गणनाथोपि लम्बोदरोपि कलानिश्चयेन अस्थिशेषोभवेत् मेदसः क्षयात्॥ उक्तञ्च॥ प्रातर्मधुयुतं वारिसेवितं स्थौल्यनाशनमिति॥

## भाषाटीका

मेदरोगके कारण जो शरीर बहुत स्थूल होजाय तो प्रातःकालमें मधुको ठंडेपानी केसाथ पियें तो मेदरोग दूर होजाय ५

इति मेदःप्रतीकारः

अथ कृमिरोगस्य प्रतीकारमाह। त्रिकट्विति

त्रिकटु त्रिफला कलिंग निम्बात्रिवृद्दन्ता खदिरोद्भवः कषायः पञ्चमूत्रसमन्वि

तोनिपीतः क्रिमिकोटीरपि हन्तिवेगतोयदि

त्रिकटुत्र्यूषणम् · त्रिफलाप्रसिद्धा · कलिङ्ग मिन्द्रयवम् · निम्बो हिङ्गु · निर्यासः · त्रिवृत् रेचनी · उग्रा वचा · खदिरः खदिरसारः सम्यः उद्भवो यस्य एतादृशो यं कषायः क्वाथः पशुमूत्रसमान्तां गोमूत्रसंयुक्तो निपीतः कृतपानः क्रिमिकोटीरपि बहून् कृमीन् वेगतो जवेन हन्ति नाशयति । कोटिशब्दो बहूनां बोधकः.

भाषाटीका

जो पेटमें गिंडार पडगई होयतो · सोंठ · मिर्च · पीपल · हर्ड · बहेडा · आमला · इन्द्रजौ · नीम की छाल · निसोत · बच और खेरसार इनका काढा करके उसमें गोमूत्र गेरके उसे पी लेतो पेटके सब कीडे मरजांय और रोगी सुखी होय ६

इति क्रिमिप्रतीकारः

अथ मुखपाकप्रतीकारमाह । जातीप्रवालेति

जातीप्रवालं त्रिफलायवासदार्वीत्रिया
मामृतगोस्तनीनाम् कषायकः सौद्रयु
तो निहन्ति मुखस्य पाकं मुखपंकजस्य-
न॥ ७ ॥

जातीप्रवालानि मालतीपत्राणि च · त्रिफला पथ्याविभीतक्यामलकीनां समानि फलानि · यवासो यासः दार्वी त्रियामा पच्चंपचा · अमृता गुडूची गोस्तनी मृद्वीका · जातीप्रवालादीनामष्टानां कषायकः क्वाथः सौद्रयुतो मधुसंयुक्तः मुखपङ्कजस्य मुखस्य पाकं गंडूषकरणात् निहन्ति । उक्तञ्च चक्रपाणिदत्तेन । जातीपत्रामृता द्राक्षा यासदार्वी फलत्रिकैः । क्वाथः क्षौद्रयुतः शीतो गंडूषो मुखपाकनुदिति ॥ भाषाटीका

मालतीकेपत्ते · हर्ड · बहेडा · आवलां · जवासा · दार

हल्दी · गिलोय · औरगोस्तनीदाख इनकाकाढा करकेउ-
समेंमधुमिलाय दे जबशीतलहोयजाय तबउस्कोमुख
मेंभर२कै कुल्ले करेतो मुखपाकरोगनिवृत्तहोजाय ॥७

इतिमुखपाकोपचारः७

अथाम्लपित्तस्याचिकित्सामाह। भूनिम्बेति

भूनिम्बनिम्बत्रिफलापटोलीवासामृता
पर्पटभृङ्गराजैः क्वाथोहरेत्क्षौद्रयुतो
ऽम्लपित्तंचित्तं यथावारवधूविलासः
॥ ८ ॥

भूनिंबादिदशभिः कृतः क्वाथः सः क्षौद्रयुतः पीतः सन्
अम्लपित्ताभिधं रोगंहरेत्। तत्रदृष्टान्तः। यथावारवधूःवारस्य
जनसमूहस्यवधूः स्त्रीतस्या विलासः कामिनश्चित्तं यथाहरेत्
तथेत्यर्थः॥

भाषाटीका

चिरायता · नींबकीछाल · त्रिफला · पलवलपत्ती · बं
सा · गिलोय · पित्तपापड़ा · औरभंगरा · इनका काढासिद्ध
करकेउस्में मधुमिलाय केपीवेतो अम्लपित्तरोगजाय ८

इतिअम्लपित्तप्रतीकारः

अथ प्रमेहस्याचिकित्सामाह। स्फुरदिति

स्फुरत्सुंदरोदारमन्दारदामप्रकामाभि
रामस्तनद्वन्द्वरम्ये हरिद्रारजोमाक्षिकै
र्म्यांविमिश्रः शिवायाः कषायः प्रमेहा
पहारी॥ ९॥

उदारोमहांश्चासौ मन्दारश्चतथा। तस्यदाममाला। सु
स्तप्रकाशमानञ्च तत्सुन्दरं शोभनंचतथा। स्फुरत्सुन्दरंयत्
उदारमन्दारदामतेन प्रकामं यथेप्सितमभिरामं मनोज्ञम् ईदृशं

यत् स्तनयोर्द्वन्द्वन्तेनरम्ये रमतेमनोयत्ररमेः पारदुपधादितियत् मनोहरे। तत्सम्बोधने हेस्फुरत्सुन्दरोदार मन्दार दामप्रकाशाभि रामस्तनद्वन्द्वरम्ये। शिवायाधात्र्याः कषायः क्वाथः सचहरिद्रा रजसानिशाच्चूर्णेन माक्षिकेण मधुनाच यामिश्रोयुक्तः पीतः सन् प्रमेहापहारी मूत्रदोषापहर्त्ता भवतीतिशेषः॥

भाषाटीका

हल्दी का चूरन और मधु दोनों को आमले के काढ़े में मिलायके पीवे तो प्रमेह का रोग नाश होय रोगी सुखपावे।

आपिच। समध्विति।

समधुश्छिन्नास्वरसोनाना मेहनिवारणः
वदंतिभिषजःसर्वे शरदिन्दुनिभानने १७॥

हे शरदिन्दुनिभानने शरद। शशिसमानास्ये समधुः मधु सहितः छिन्नाया गुडूच्याः स्वरसः वस्त्रनिष्पीड़ितो रसः स्वरसल क्षणं यथा। अहताल् तत्क्षण कृष्टद्रव्यात्क्षुणात्समुद्भवेत्। वस्त्रनिष्पीडितो यश्चस्वरसोरसउच्यतइति। सचपीतः सन् नाना मेहनिवारणः सर्वमेहानिरस्कर्ता भवतीति सर्वे भिषजोगदङ्कारो वदंतिव्यक्तं कथयन्ति॥ तदुक्तम्। गुडूच्याः स्वरसः पेयोमधुना सर्वमेहजिदिति। आपिच। हरिद्रामधुसंयुक्तोरसोधात्र्याः समाक्षिक इति॥ सर्वमेहजिदित्पूर्वेण संबंधः॥

भाषाटीका

गिलोय को कूट के वस्त्र से उसी ने चोड़ले फिर उस्में मधु मिलायके पीवे तो सब प्रकार के प्रमेह नष्ट होंय और रोगी सुखपावे यह सभी वैद्य कहते हैं॥

अत्राहिताहितमुक्तम्। श्यामाककोद्रवोद्दालागोधूमचण कादकि। कलायाः कथिताभोज्ये पुराणा मेहिनां हिताः॥ यवान्न

पिञ्छाति मुद्गाः शाल्यः षष्टिकास्तथा । नवातिक्तानि शाकानि जाङ्गलाः पक्षिणो मृगाः ॥ प्रमेही गुड़ दुग्धाज्य तैलतक्रसुराः सदा-अम्लेक्षुरसपिष्टान्नानूप मांसानि वर्जयेदिति ॥ १० ॥

॰ अथ वातरक्तस्यौषधमाह । रतिकेलीत्यादिना ।

रतिकेलिकलाकुशले विलसद्वलये-मलयेनसमानकुचे अमृताव्रततीरु तैलवती दलयेदनिलास्त्रमुदारतरम् ॥

हे रतिकेलि कलाकुशलैरतौ सुरते याः केलयः परीहासाः तासु सुरत क्रीडासु याः कलाः कपटरूपाः तासु कुशला शिक्षिता तत्संबोधने । हे विलसद्वलये कङ्कणे यस्याः तत्संबोधने भो मलयेन समान कुचे । विलसती विलास युक्ते मलयेन चन्दनाद्रिणा समानौ स्थूलत्वेन काठिनत्वेन च तुल्यौ कुचौ स्तनौ यस्याः तत्संबोधने । अमृता व्रतती गुडूचिका वल्ली रुबुतैलवती एरण्ड स्नेहयुक्ता उदारं महान्तम् अनिलास्रं वातरक्त रोगम् दलयेत् नाशयेत् । पञ्चाङ्गुलतैलेनामृतायाः क्वाथः पेय इति भावः ॥

## भाषाटीका

अरंडके तेलके साथ गिलोयके काढा पीवेतो वातरक्तका रोग नष्ट होय ॥ ११ ॥

अपिच । मधुकेति

मधूकरुणा गोपिका देवधूपैः शृतं वातरक्तापहं पिण्डतैलं कषायः सहैरंडतैलेन पीतस्तथैरगाड़ा सिंहास्य वत्सादनी नाम ॥ १२ ॥

मधुका यष्टी अरुणा मञ्जिष्ठा गोपिका श्यामा देवधूपो राल्लः एतैः शृतं पक्कं पिण्डतैल संज्ञकं वातरक्तापहं भवति ।

## भाषाटीका

मुलहठी · मंजीठ · सांऊ · और राल इनका काढ़ापीने सेवातरक्त कारोगदूरहोय॥ अपिच। कषायइति॥ एरण्डोगन्धर्वहस्तकः · सिंहास्योवाजिदन्तकः वत्सादनीछिन्न रुहा · त्रयाणाकषायः एरण्डतैलेनसहपीतः सन् · तथावातरक्त पहाभवाति॥ अत्रचचक्रपाणिदत्तेन। एरण्डस्थानेचतुरङ्गुलउ क्तः। यथा। वासागुडूचीचतुरङ्गुलानामरण्डतैलेनपिबेत्क षायम्। क्रमेणसर्वाङ्गजमप्यशेषंजयेदसृग्वातमवातिकरागीत

## भाषाटीका

रैंडी · वांसा · और गिलोय इनके काढे में अरंड केतेल कोमिलाय केपीनेसे बातरक्त कारोगनहीं रहै॥ १२॥

इतिवातरक्तचिकित्सा

अथाविसूचिकोपायमाह। लशुनेत्यादिना।

**लशुनजीरकसैंधवगंधकात्रिकटुरम दचूर्णमिदंसमं सपदिनिम्बुरसेनाविसू चिकाहरतिभोरतिभोगविचक्षणे १३॥**

लशुनोरसोनः जीरकोऽजाजी सैंधवो माणिमन्थम् गंध कः सौगन्धिकः त्रिकटुविश्वोपकुल्यामरिचात्मकत्र्यूषणम्-रामठंहिङ्गु। लशुनादीनांसमाहारः समाहारेनपुंसकम् रसोना दीनांचूर्णरजः इदंसर्वंसमं समानभागं ग्राह्यम्। तादिदं निम्बुर सेन निम्बूकजलेन सहपीतम् · वा · निम्बूकजलेन वटिकां-कृत्वाभक्षितंसत् · भोरतिभोगविचक्षणे हे सुरतसम्भोगप्रवी णे · सपदिशीघ्रं · विशूचिकां विशूचीं हरति नाशयति॥ अस्या निरुक्तिलक्षणेतु। सूचीभिरिवगात्राणि तुदन्संतिष्ठतेऽनि लः। यत्राजीर्णेनसौवैद्यैर्विसूचीतिनिगद्यतेइति। नतांपरि

मिताहारा लभंतेयदि तागसाः। मूढ़ास्त्वजितात्मानो लभन्तेऽशन लोलुपाः॥

## भाषाटीका

जो विसूचिका होयजिसे काशीवासी शीतरस, गौड़िये बंगाली ओलाउठी, और मुसल्मान उस्मारक कहते हैं- इसरोगके निवृत्ति के अर्थ लसुन, जीरा, सेंधानोंन, सोधीगंधक, सोंठ, मिर्च, पीपल और हींग इन आठों के समान भागलेके कूटके सूक्ष्म चूर्णकरके मिलाय लें उसे कागदी नीबू के रसके साथ पीवे, वा नीबू का रस गेरके चने से बड़ी बड़ी बनाय ले, उस गोली को जिससमें यह रोग उठे उसी समय में वा दो या चार घड़ी के भीतर पीलें वा खायलें तो विसूचिका की निवृत्ती होय रोगीको आनन्द होय १३

अथ पूर्वार्द्धेन पिपासायाः परार्द्धेन वमथश्चोपचारमाह। रुगिति

रुग्लाजाञ्जवटप्ररोहमधुकैर्मध्वान्वितैः कल्पिता उग्नास्याशुतृषां भृशं प्रशमयेदाऽऽस्यांतरस्थावटी। राला लाजलवंगनागचपलाम्बीकोलमज्जाबुदक्षीरवड्युक्प्रशमयद्वान्तिं त्रिदोषोद्भवां॥१४॥

रुक् कुष्ठौषधम्, लाजाम्बष्ठानि, सतुषतण्डुलानि, अञ्जपद्मफलम्, वटप्ररोहोन्यग्रोधाङ्कुरो यद्वाचासस्कन्धजटेति यावत्, मधुकंक्षीतकम्, एतैर्मध्वान्वितैर्माक्षिकयुक्तैः कल्पितावटी गुटिकासाच आस्यान्तरस्था मुखाभ्यंतरे धृतासती उग्रनाशीघ्रं तृषामाशुशीघ्रं भृशंप्रकर्षेण प्रशमयेत् शान्तिनयेत्

## भाषाटीका

जोविसूचिकावालेको प्यास बहुत होय तो कूट, धान की खील, कमलगट्टा, बड़की जटा, और मुलहटी इनको

पीसकेमधु मिलायके गोलि यांवनालें· गोलीको मुख
मेंरखउस्का रस चूसाकरें तौकेसीहीप्यासहोमानहोगी
एलास्थूलैला·लाजाः लवङ्गं देवकुसुमम्·नागोनागकेसरः
चपलाकणास्त्री प्रियङ्गुः·कोलमज्जा बदरीबीजसारःअंबु
दोमुस्तकः श्रीखंडश्चंदनम्।एषामादीनां समाहारस्तेनक्रोंवि-
ता। एतेषांचूर्णम्·मधुखंडयुक् क्षौद्रसिताभ्यामालोड्याव
लीढंसत्·विदोषोद्भवां यान्तिंछर्दिं प्रशमयेत् शान्तिंनयेत्॥

भाषाटीका

बड़ीइलायची·धानकीखील·लवङ्ग·नागकेशर·
पीपल·प्रियंगु·बेरकीगुठलीकी मिंगी· मोथा·औरस्वेत
चन्दन इनके चूर्णमें मधुऔर सक्कर मिलायकेचाटे
तौ विसूचिका मेंउल्टी बन्द होय ॥ १४ ॥

पद्येकेननिदाघोपचारमाह।स्मेत्यादिना॥ ॥

स्मेरस्याकारे चतुरवचने चारुचिकुरे-
विभूत्यालंकारे करतलऌसन्नीलनलिने
निदाघः संजातस्तदिहकिमु सरोजन्म-
कदली दलैःक्लान्ते तल्पे लघुस्वापिहिर्मे
हित्याँनिपुणे॥३५॥

हे स्मेरस्याकारे·स्मारःदमीस्तद्वदस्यः स्वभाव सुन्दरः
आकृतिर्यस्यास्तत्संबोधने।पुनः हे चतुरवचने चतुराणिसूत्या
नानिवचनानिभाषणानि यस्यास्तत्संबोधने।हे चारुचिकुरे-
चारवश्चिकुराः कुन्तलायस्यास्तत्संबोधने। आपिच।आपि
करतल ऌसन्नीलनलिने करस्यतलो·धूर्ईभागस्तस्मिन् ल
सत् शोभमानं नीलं सुराज्यालेवाद्भुत वर्णाविशिष्टं नलिनंसरोवे
दं यस्यास्तत्संबोधने।तवानिदाघो घर्मः सञ्जातः किमुद्गति

मरणे। यादियर्मः सम्जातस्तर्हि हे साहित्यनिपुणे हे काव्यप्रबंधप्रवी णे। सरोजन्मनः पंकजस्य कदल्याः रंभायाश्च दलानि पर्णानितैः क्लृप्ते कल्पिते तल्पे शय्यायां लघुक्षिप्रम् स्वपिहि शयनं कुरु॥

भाषाटीका

जो पसीने बहुत आवते होंय तो कमल के अथवा केला के पत्तों का सांथरा बनाय के उसपे शयन करे॥ १५ ॥

अथपामोपचारमाह। रसेत्यादिना

रसद्विजीरद्विनिशामरीचसिंदूरदैत्येंद्रमनः शिलानाम् चूर्णीकृतानांघृतमिश्रितानां त्रिभिःप्रलेपैरपयातिपामा १६

रसःशिवबीजम् द्विजीरेशुक्लकृष्णभेदात् द्वौजीरकौ द्विनिशेहरिद्रा दारुहरिद्रेतिभेदात् द्वेपीते मरिचमूषणम् सिंदूरंनागसं स्भवम् दैत्येन्द्रोगंधकः मनःशिला कुनटी। चूर्णीकृतानांसम्य क्पिष्टानाम् पुनश्चघृतमिश्रितानां माहिषनवनीतसहितानां मेतेषांत्रिभिः प्रलेपैः पामा कच्छुः अपयातिनश्यति॥

भाषाटीका

पारा दोनोंजीरे हल्दी दारुहल्दी मिर्च सिंदूर गंध क और मनसिल इनको पीस के चूर्ण करके भैंस के माख न के साथ भलीभांति प्रलेप बनाय लेप करे तो तीनही लेप से खाज चलीजाय॥ १६ ॥

अथविषादिकानिग्रहमाह। मदनेत्यादिना॥

मदनसैंधवगुग्गुलगैरिकाज्यमधूनाल कपंकविलेपनात स्फुटितमघ्रितल चरणद्वयविवर्चतामिरसप्रीतसंभव स॥१७॥

मदनः सिक्थकम् · सैंधवंमाणिमन्थम् · गुग्गुलुर्देवधूपः गै रिकंगवेधुकम् · आज्यंघृतम् · मधुक्षौद्रम् · बालकह्रीवेरम् · ए षांपकस्यानिषद्धरस्य · विलेपनात् लेपात् · स्फुटितमपिविकासि तमपि · चरणद्वयमांड्घ्रियुग्मम् · विकचं प्रस्फुटितं यत् तामरसं पद्मं तस्यप्रतिमसदृशभवेदित्यर्थः ॥ स्युरुत्तरपदेप्रख्यः प्रकैः प्रतिमोनिभ इतिहेमचन्द्रः ॥

## भाषाटीका

जो बिवाई से दोनों पैर भी फटगये होंय तो · मोम · सेंधानो न · गूगल · गेरू · घी · मधु · और सुगंधवाला इनको पीसके मि लाके चरणों में मर्दन करे तो फूले कमल से पैर होजांय १७

अथदुर्नामादिरोगाणांनिग्रहमाह । पथ्येत्यादिना ॥

पथ्यातिलारुष्करकैः समांशैर्गुडेनयुक्तैः खलुमोदकस्यात् दुर्नामपांडुज्वरकुष्ठ कासश्वासजयेत्स्नीहरुजंच नद्धत् १८॥

पथ्याहरीतकीतिलाः स्वनाम्नाप्रसिद्धाः पितृतर्पणाः अरु व्रणंकरोति · दिवाविमोनिटः । अरुष्करको भल्लातकः एतैः समां शैः समानभागैर्गुडेनाद्विगुणेनयुक्तैः खलुनिश्चयेमोदको लड्डु कः स्यात् । स्वादितः सन् दुर्नाम पांडुज्वर कुष्ठकास श्वासम् · न द्धत स्नीहरुजंचजयेत् ॥

## भाषाटीका

हरड · तिल · भिलाया · इन तीनों के समान भाग लेके दूने गुड़ में मिलायकर लड्डू बनालें · इन के खाने से · अर्श रोग · पांडुरोग · ज्वर · कोढ़ · खांसी और स्वास, ये सब रोग नष्ट होंय ॥ १८ ॥

अथगंडमालोपचारमाह । भल्लातकोत्ते ·

भल्लातकासीसहुताशदन्तीमूलैर्गुडस्नुक्‌रविदुग्धदिग्धैः लेपोचितैर्गच्छति गंड मालासमीरवेगादिव मेघमाला ॥ १९ ॥

भल्लातको वीरवृक्षः कासीसं गौड़भाषया हीराकसीति ख्यात उपधातुविशेषः हुताशश्चित्रकः दन्तीमूलं एरण्डपत्रिकै(का)मूलम्। एतैश्चतुर्भिः कथम्भूतैः गुडस्नुक्‌रविदुग्धदिग्धैः गुडेन स्नुहीदुग्धेन अर्कदुग्धेन चादिग्धैर्लिप्तैर्युक्तैरिति यावत् पुनश्च लेपोचितैः लेपक्रियायोग्यैः कृतलेपा गंडमाला समीरवेगात् मेघमालेव गच्छति ॥

## भाषाटीका

भिलावा, कसीस, चीता, अजेपाल की जड़ इनको पीसकर इसमें गुड़ और थोहर का दूध और आक का दूध मिलाय के लेप करनो योग्य है. लेप से गंडमाला चली जाती है

अथ कंठामयस्य प्रतीकारमाह। गोमूत्रेणेति.

गोमूत्रेण कृतः कलिंग-कटुकापाठावृषा-ब्दामरक्वाथः क्षौद्रयुतो निहन्ति सकला-न्कंठामयानुत्कटान्। पाठातेजवतीरसाञ्जनयवक्षारोपकुल्यानिशा द्वयानां मधुना कृता मुखधृता तद्वद्वटी वर्तते ॥ २० ॥ ७ ॥

कलिंगमिन्द्रयवम् कटुका कटुकी पाठा प्रसिद्धा वृषोऽटरूषः अब्दो मुस्तकः अमरो देवदारु एषां क्वाथो गोमूत्रेण साधितः पुनः क्षौद्रयुतो मधुसहितः पीतः सन् उत्कटान् दुःसहान् सकलान् कंठामयान् निहन्ति ॥

## भाषाटीका

इन्द्रजौ कुटकी पाठा, जिसे गोंड़ में आकनादी कहते हैं

